श्रीशंकर

# श्रीनिघंटाशिरोमणिः ।



## मंगलाचरणम् ।

श्रीगणेश्वराय नमः । वंदे महागणपतिं प्रथमिधिप्रसिद्धये । लंबोदरं चतुर्बाहुं शुंडादंडविराजितम् ॥ १ ॥ आदौ निघंटानालोक्य नामभिः पत्रकं कृतम् । सिद्धेश्वराख्यवैद्येन बेलापुरनिवासिना ॥ २ ॥ तत्सूनुना राघवेन तु निघंटानां शिरोमणिम् । अकरोद्भिषजां प्रीत्यै लोकोपकृतिहेतवे ॥ ३ ॥

१ गुडूची म गुळवेल । ( नामानि. ) गुडूच्यमृतवल्ली च ज्वरारिरमृता तथा । श्यामांवरा सुरकृता तथैव मधुपर्णिका ॥ १ ॥ छिन्नोद्भवा मृतलता छिन्ना चैव रसायणी । तथैव सोमलतिका तद्वदमृतसंभवा ॥ २ ॥ वत्सादनी छिन्नरुहा विशल्या तु भिषक्प्रिया । कुंडलिनी वयस्था च तथा चैव जिवंतिका ॥ ३ ॥ चंडहासा छद्मिका च तथा नागकुमारिका । एते 'राजनिघंटे' तु सम्यक् प्रोक्ता भिषग्वरैः ॥ ४ ॥ धारा तु कुंडली चैव छिन्नांगा चक्रलक्षणा । तंत्रिका ज्वरनाशी च मंडली देवनिर्मिता ॥ ५ ॥ सौम्या विश्या वहुछिन्ना प्रोक्ता 'धन्वंतरे' तथा । 'कैयदेवे' भिषक्श्रेष्ठैः 'सोमा' चैका प्रकीर्तिता ॥ ६ ॥ 'द्रव्यरत्नाकरे' चैव छिन्या चैका स्मृता बुधैः । चक्रिका तंत्रिका चैव प्रोक्ता 'भावप्रकाशके' ॥ ७ ॥ तिक्तामृता भिषक्श्रेष्ठैः प्रोक्ता 'गणनिघंटके' । चत्वारिंशत्संख्यकाश्च संप्रोक्ता भिषजां वरैः ॥ ८ ॥ गुणाः । गुडूची कोष्णवीर्या च कषायातिक्तका स्मृता । कृष्णज्वरवमीनां च नाशिनी भ्रमहारिणी ॥ ९ ॥ पांडुप्रमेहश्वासासृक्कंडूदाहहरा तथा रसायनी । संप्रोक्ता भिषजां श्रेष्ठैः 'राजनामनिघंटके' ॥ १० ॥ रक्तार्शःकुष्ठजंतूनां त्रिदोषाणां विनाशिनी । ग्राही मेध्यायु प्रदेति कफवातापहारिणी ॥ ११ ॥ कंडूप्रमेहघ्न्या पित्तघ्नी बला 'धन्वंतरे' स्मृता । पाके मधुरसा हृद्या वन्हिकृत् श्वासनाशिनी ॥ १२ ॥ कामलामज्वरघ्नीति 'कैयदेवे' स्मृता बुधैः । दोषज्वरहरा चैव दीपनी

तिक्तमुष्णं रसश्चैव कटुप्रोक्तं सदैव हि । वल्लीमलकफपित्तघ्नं कद्रूकुष्ठविनाशनम् ॥ ३५ ॥ असृग्ज्वरघ्नं दाहघ्नं प्रोक्तं राजनिघंटके । पत्रं तस्य भिषक्छ्रेष्ठैः पित्तघ्नं कफनाशनम् ॥ ३५ ॥ रक्तदोषहरं चैव संप्रोक्तं नैव संशयः । फलं त्रिदोषशमनं वल्ली चैव कफापहा ॥ ३६ ॥ मूलं विरेचनं प्रोक्तं 'धन्वन्तरिनिघंटके' । वल्ली शीतकरी प्रोक्ता श्लेष्मघ्न वीजतेलकम् ॥ ३७ ॥ वाताशीतिहरं चैव 'द्रव्यरत्ने' प्रकीर्तितम् । फलं त्वग्दोषशमनं प्रोक्तं 'नामनिघंटके' ॥ ३८ ॥ ५ काकोली । काकोली मधुरा काकी वायसा वायसूलिका । क्षीरा तु ध्वांक्षिका वीरा शुक्ला धीरा तु मेदुरा ॥ ३९ ॥ ध्वांक्षोली स्वादुमांसा च वयस्था जीवनी तथा । एते 'राजनिघंटे' तु सम्यक् प्रोक्ता भिषग्वरैः ॥ ४० ॥ कोकिला कविभिः प्रोक्ता 'धन्वतरिनिघंटके' । काकोष्णी कावली काणा शुक्लक्षीरा तथैव च ॥ ४१ ॥ ततस्तु क्षीरशुक्लीका वायस्था च तपस्विनी । 'कैयदेवे' भिषक्श्रेष्ठैरेते प्रोक्ता न संशयः ॥ ४२ ॥ वायसोली भिषक्श्रेष्ठैः प्रोक्ता 'मदनपालके' । चतुर्विंशतिसंख्या च संप्रोक्ता भिषजां वरैः ॥ ४३ ॥ गुणाः । शीतमधुरसा चैव क्षयपित्तानिलापहा । रक्तदाहहरा चैव ज्वरदाहविनाशिनी ॥ ४४ ॥ कफनिर्हरिणी प्रोक्ता तथा शुक्रविवर्धनी । प्रोक्ता 'राजनिघंटे' स्मिन् भिषक्श्रेष्ठैर्न संशयः ॥ ४५ ॥ वृष्या गुरु बृंहणा च वातपित्तहरा तथा । शोषघ्नी 'कैयदेवे' च संप्रोक्ता भिषजां वरैः ॥४६॥ रक्तपित्तहरा चैव हृद्रोगशमनी तथा । प्रोक्ता 'द्रव्यनिघंटे' च भिषक्शास्त्रविशारदैः ॥ ४७ ॥ वाततृष्णाहरा चैव प्रोक्ता 'मदनपालके' । वातदाहास्रपित्तघ्नी शोषहा 'भावनामके' ॥ ४८ ॥ ६ 'क्षीरकाकोली । ततस्तु क्षीरकाकोली क्षीरशुक्ला पयस्विनी । पयस्था क्षीरमधुरा वीरा क्षीरविषाणिका ॥ ४९ ॥ जीववल्ली जीवशुक्ला 'राजनाम्नि' निघंटके । क्षीरिणी तु सुकोली च वयस्था च क्षुरा तथा ॥ ५० ॥ विषाणिका 'कैयदेवे' कविभिः परिकीर्तिता । सुराह्वया शिराह्वा च 'द्रव्यरत्नाकरे' स्मृता ॥ ५१ ॥ तथा 'मदनपाले' च सुराह्वा परिकीर्तिता । धारा तु क्षीरवल्लीका शुक्ला 'भावप्रकाशके' ॥ ५२ ॥ गुणाः । हृद्रोगशमनी प्रोक्ता 'द्रव्यनामनिघंटके' । ७ आपमूर । न सनूर । मुकुपर्णी क्षुद्रसहा शिम्बी मार्जारगंधिका ॥ ५३ ॥ वनजा शिरणी हस्वा-

॥ ७३ ॥ बृहती जीवपुष्पा च तथैव च यशस्करी । प्रोक्ता 'राजनिघंटे'
तु सतसंख्या न संशय. ॥ ७४ ॥ भूतविद्रावणी ज्ञेया धेमाद्रसनियाम-
का । गुणाः । बृहज्जीवंतिका चैव मधुवीर्या रसायनी ॥ ७५ ॥ भूतद्राविति
सम्प्रोक्ता 'राजनामनिघंटके' । १०. हेमजीवंती । मं. पिवळा डांगेल । ततस्तु
हेमजीवनी तृणमयी हिमाश्रया । स्वर्णपर्णी सुजीवंती स्वर्णजीवा सुप-
र्णिका ॥ ७६ ॥ हेमपुष्पी स्वर्णलता जीर्णजीवंतिका तथा । हेमवल्ली
हेमलता प्रोक्ता 'राजनिघंटके' ॥ ७७ ॥ सेना द्वादशसंख्याश्च सम्प्रो-
क्ता भिषजां वरैः । स्वर्णजीवंतिका वृष्या चक्षुष्या मधुरा च सा ॥७८॥
शिशिरा वातपित्तासृग्दाहजिद्बलवर्धिनी । गुणाः । स्वर्णजीवंतिका 'वृ-
ष्या' 'चक्षुष्या' मधुरा तथा ॥ ७९ ॥ शिशिरा वातपित्तासृग्दाहघ्नी
बलवर्धिनी । प्रोक्ता 'राजनिघंटे' च भिषग्विद्याविशारदैः ॥ ८० ॥
११. लिंगिनी । म. शिवलिंगी । हिं गि री बहुपुत्री च ईश्वरी शिववल्लिका ।
स्वयंभूलिंगसम्भूता लिंगी चित्रफला ततः ॥ ८१ ॥ चंडली लिंगजा देवी
चंडा या स्तंभिनी तथा । शिवजा शिववल्लीति प्रोक्ता 'राजनिघंटके'
॥ ८२ ॥ 'द्रव्यरत्नाकरे' चैव संप्रोक्ता लिंगसंभवा । पंचमी संख्यका
प्रोक्ता पुरातनचिकित्सकैः ॥ ८३ ॥ लिंगिनी कटुरुष्णा च दुर्गंधा च
रसायनी । सर्वसिद्धिकरा दिव्या वश्या रसनियामिनी ॥ ८४ ॥ गुणाः ।
लिंगिनी कटुरुष्णा च दुर्गंधा च रसायनी । सर्वसिद्धिकरी दिव्या
'नृपे' रसनियामिनी ॥ ८५ ॥ पित्तजा तु क्षयकरी कफकुष्ठविनाशिनी ।
'द्रव्यरत्नाकरे' प्रोक्ता भिषग्विद्योपजीविभिः ॥ ८६ ॥ ११ कोशातकी ।
म. कडूदोडकी । कोशातकी कृतच्छिद्रा जालिनी कृतवेधना । क्ष्वेडा सु-
तिक्ता घंटाली मृदंगफलिनी तथा ॥ ८७ ॥ प्रोक्ता 'राजनिघंटे' च
भिषक्शास्त्रविशारदैः । श्वेतधाया कोशवती करोटी च मृदंगिका
॥ ८८ ॥ ज्वाला तु तिक्तधाराशी ज्योत्स्ना च कर्कोटकच्छदा । छली च
घोषका चैव 'कैयदेवे' प्रकीर्तिता ॥ ८९ ॥ 'द्रव्यरत्नाकरे' चैव वेदि-
भा परिकीर्तिता । रक्ता ध्वेलला चैव तथैव कर्कशच्छदा ॥ ९० ॥
'अमरे' चैव कविभिः प्रोक्ता धामार्गवा शुभम् । त्रयोविंशतिसंख्यास्त
सम्प्रोक्ता कटुशालिनी ॥ ९१ ॥ गुणाः । कटुकोशातकी चैव शिशिरा कटु-
का तथा । कषायकफविख्याता पित्तवातकफापहा ॥ ९२ ॥ मदा-

मानविशोधी च प्रोक्ता 'राजनिघण्टके' । पद्माराय विशोधी च तिक्त- माराय शोधिनी ॥ ९३ ॥ रक्षा लघ्वी च विख्याता पाके तु कटुका स्मृता। गरोद्गरं जयेत् कासं पाण्डुशोषविनाशिनी । ९४ ॥ कफप्लीहाऽग्निगुल्मघ्नी कामलाकुष्ठनाशिनी । फलं पाके हिमं प्रोक्तं 'धन्वन्तरिनिघण्टके' ॥ ९५ ॥ फल तु भेदनं प्रोक्तं शीतलं स्यात्तथा लघु। त्रिदोषमेहजुत् प्रोक्तं धीधी 'मदनपालके' । १२ स्वगुप्ता । गावाजुहिरि । स्वयंगुप्ता गुप्ता च कपिकच्छु महर्षिभि ॥ ९६ ॥ लांगुली दुरूरी चंडा मर्कटी दुरभि- ग्रहा । कपिरोमफलाऽगुप्ता कुस्पर्शा कच्छु राजया ॥ ९७ ॥ प्रावृष्ण- या भूकाशिवी बदरी बदरंभी । शियी वराहिना तीक्ष्ण रोमालुर्वनकं- डूफा ॥ ९८ ॥ किराटेमा रोमवल्ली चैषा 'राजनिघण्टके' । शीतपि- त्तघ्नणामृष्टी प्रोक्ता 'राजनिघण्टके' ॥ ९९ ॥ वातघ्नी कविभि प्रोक्ता 'धन्वन्तरिनिघण्टके । 'कैयदेवे' बृंहणीति मिथ्याग्नि परिकीर्तिता ॥ १०० ॥ गुणा । बाजं तु वातशमनं वाजीकरणमेव च । प्रोक्तं 'मदन पाले' च भिषक्शास्त्रविशारदैः ॥ १०१ ॥ गुरु तिक्ता वातहरा बल्या कफविनाशिनी । प्रोक्ता 'भावप्रकाशे' च पुरातनचिकित्सकैः ॥ १०२॥ सीता हिमेति संप्रोक्ता गणनामनिघण्टके । १४ कटुतवा । म कडूमापला । कटुतुंबी कटुफला तुंबिनी कटुतुंबिनी ॥ १०३ ॥ बृहत्फला राजपुत्रा तिक्तबीजाजतुंबिका । प्रोक्ता 'राजनिघण्ट' च भिषक्शास्त्रविशारदै ॥ १०४ ॥ कटुकालाबुनी तुंबी लबा पिंडफला तथा । इक्ष्वाकु क्षत्रियवरा तथैव च महाफला ॥ १०५ ॥ धन्वन्तरौ स्मृता नूनं भिषक्शास्त्रपरायणैः । ततोऽत्र पिंडफला चैव राजन्या प्रवरा वरा ॥१०६॥ तिक्तालाबू दुग्धनिका तुम्बिका तदनंतरम् 'कयदेव' प्रयुक्ताश्च सर्वां द्वाविंशति स्मृता ॥ १०७ ॥ कटुतुंबा भवत्तीक्ष्णा वातहृत् श्वा- सनाशिनी । कटु स्यात्कफवातघ्नी शोधनी व्रणशूलहृत् ॥ १०८ ॥ दोष- फलो विषनाशा च प्रोक्ता 'राजनिघण्टके' । रसं पाक हिमं लघ्वी प्रोक्ता 'गणनिघण्टके' ॥ १०९ ॥ पाके कण्वी वातपित्त-श्वासज्वरविनाशिनी । महत्या शीतला प्रोक्ता 'धन्वन्तरिनिघण्टके' ॥ ११० ॥ वात पित्तज्वरान् हति हृद्या भावप्रकाशके । १५ अमरवल्ली । म अमरवेल । खपरल्याकाशवल्ली च तुस्पर्शा व्योमवल्लिका ॥ १११ ॥ प्रोक्ता 'राज

निघंटे ' तु ततस्त्वमरवल्लरी । ' भावप्रकाशे ' विदिता पंचसंख्या भिषग्वरैः ॥ ११२॥ गुणाः । आकाशवल्ली कटुका मधुरा पित्तनाशिनी । वृष्या रसायनी बल्या दिव्यौषधि ' नृपे ' स्मृता ॥ ११३ ॥ माही तिक्ता पिच्छिला च तुवरा नेत्ररोगहृत् । ' भावप्रकाशे ' संप्रोक्ता पुरातनभिषग्वरैः ॥ ११४ ॥ छर्द्यग्निकारि विख्याता पित्तश्लेष्महरा भवेत् । १६ देवदाली । जीमूतका फंटफला सदाहेमी गरागरी ॥ ११५ ॥ तथा कोशफला घोर.. फदंबा कदूफला तथा । विषहा कर्कटी चैव देवदाली तदुत्तरम् ॥११६॥ ततस्तु सारमुष्टिका कोशपृष्ठा तथैव च । आखुविषहा देवाली च ततो रोमशपत्रिका ॥ ११७ ॥ तुरंगिका च कर्मारी देवताड़ा च ताड़का । द्रव्यरत्ने ' स्याद्वेणी भिषग्भिः परिकीर्तिता ।११८। तत्नार्का देवताड. आली ' मदनपालके ' पत्रागरी कोशसंख्या संप्रोक्ता भिषजां वरैः ॥११९॥ गुणा । तिक्तोष्णा देवदाली स्यात्कटुः पांडुकामापहा। दुर्नामश्वासकासघ्नी कोमला भूतनाशिनी ॥ १२० ॥ ' राजनाम्नि ' निघंटे च भिषग्भिः परिकीर्तिता । फलं कृमिघ्नं संप्रोक्तं श्लेष्मघ्नं गुल्मनाशनम् ॥ १२१ ॥ शूलघातहरं प्रोक्तं वैद्यै ' भावप्रकाशके ' । याति हाऽऽखुविषघ्नी च कफपांडुविनाशिनी । ' धन्वंतरिनिघंटे ' च भिषग्भिः परिकीर्तिता । रसे तिक्ता तु पाके च तीक्ष्णा वातामहारिणी ॥ १२३ ॥ कफशोथविनाशा च कासज्वरविनाशिनी । हिक्कारुचिक्षयघ्नी च क्रिमिनुत् ' कैयदेवके ' ॥१२४॥ १७ वध्याककोटकी ॥म. वांझकटोली । वंध्या देवी नागहंत्री वंध्या कर्कोटका तथा । नागारातिमनोज्ञा च दिव्या पथ्या सुकंदका ॥ १२५ ॥ पुत्रदात्री च श्रीकंदा कंदवल्लीश्वरी तथा । सुगंधा सर्पदमनी कुमारी विषकंटकी ॥ १२६ ॥ भूतहंत्री पग चैव प्रोक्ता ' राजनिघंटके ' । नागारी नागदमनी प्रोक्ता ' धन्वंतरौ तथा ॥१२७॥ विषमा दामनी चैव निष्फला नागघातिनी । ततस्तु मजादमनी ' कैयदेवे ' प्रकीर्तिता ॥ १२८ ॥ तथा ' मदनपाले ' तु प्रोक्ता योगेश्वरी बुधैः । षड्विंशति च संख्याका संप्रोक्ता भिषजां वरैः ॥ १२९ ॥ गुणाः । वंध्याकर्कोटकी तिक्ता कटूष्णा कफनाशिनी । श्वासज्वरादिविषघ्नी च संप्रोक्ता ' राजनामके ' ॥ १३० ॥ पाके कटुरु-

घण्टके ' ॥ १४८ ॥ इन्द्राख्या इंद्रवारु च इंद्रा ' धन्वन्तरौ ' स्मृता । ऐंद्रवा-
रु सुरेंद्रा च तथैव सुरवारुणी ॥ १४९ ॥ चित्रदेवी स्थाणुकर्णा घनु श्रे-
णी तथैव च । सूर्याह्वा चैव विख्याता तथैव मरुसंभवा ॥ १५० ॥
' द्रव्यरत्नाकरे ' चैव चद्री त्वेका प्रकीर्तिता । तुवरीति भिषक्श्रेष्ठैः
प्रोक्ता ' गणनिघण्टके ' ॥ १५१ ॥ युग्माब्धिसंख्यका प्रोक्ता पुरातनचि-
कित्सकैः । गुणाः । अथेंद्रवारुणी तिक्ता कटु शीता च रेचनी ॥ १५२ ॥
गुल्मपित्तोदरश्लेष्मकृमिकुष्ठज्वरापहा । ' राजनामनिघण्टे ' तु सम्प्रोक्ता
भिषजां वरैः ॥ १५३ ॥ मेहारुचिकृमिकफपांडुरोगापहारिणी । मूढगर्भ-
हरा प्रोक्ता सर्वांगग्रथिमोचनी ॥ १५४ ॥ विषगंडामयहरा सम्प्रोक्ता
' कैयदेवके ' । रसे पाके कटु लघु वीर्योष्णा कामलापहा ॥ १५५ ॥
कफपित्तश्लेष्महरा कंठरोगापचीघ्निका । श्वासकासप्लीहहरा गरे दुर-
हरा तथा ॥ १५६ ॥ मूढगर्भव्रणहरा प्रोक्ता ' धन्वतरौ ' ध्रुवम् । २१
महत्फला । म० थोर इंद्रायण । महत्फला चित्रवल्ली महेंद्री त्रपुसी तथा ॥ १५७ ॥
ततश्चित्रफला चैव त्रपुसा तदनतरम् । पुत्रसा ( त्रपुसा? -पुत्रदा ? )
चात्मरक्षा च विशाली दीर्घवल्लिका । बृहत्फला तु संम्या च महेंद्रव-
रुणी तथा ॥ १५८ ॥ बृहद्वारुणिका चैव प्रोक्ता ' राजनिघण्टके ' । श्वेत-
पुष्पा मृगाक्षी च मृगेर्वारु मृगादनी ॥ १५९ ॥ हस्तिदन्ती नागदन्ती वारुणी
गजचिर्भटी । ' धन्वतरौ ' ' द्रव्यरत्ने ' इयमेका प्रकीर्तिता ॥ १६० ॥
एकविंशतिसंख्याका प्रयुक्ता भिषजां वरैः । गुणाः । महेंद्रवारुणी ज्ञेया
पूर्वोक्तगुणभागिनी ॥ १६१ ॥ रसे वीर्ये विपाके च किंचिदेषा गुणाधि-
का । २२ शंखिनी । यवतिक्ता महातिक्ता दृढपादा विसर्पिणी ॥ १६२ ॥
नाकुली नेत्रमीना च शंखिनी पत्रतंडुली । अक्षपीडा सूक्ष्मपुष्पी यवति-
क्ता यशस्विनी ॥ १६३ ॥ माहेश्वरी तिक्तयवा तंडुली ' राजनामके ' । इन्द्राक्षी
चव पिंडा तु नेत्रमाला यशस्करी ॥ १६४ ॥ ' धन्वतरौ ' निगदिता पुरातनचि-
कित्सकैः । तिक्तफला चैव विश्वा च बहुफेना तदुत्तरम् ॥ १६५ ॥ अक्षपीडा ब-
हुरसा प्रोक्ता ' गणनिघण्टके ' । चोरपुष्पी कोशिनी च कोरो चैव प्रर्की । त
॥ १६६ ॥ षडधिंशतिसमाख्याता पुरातनभिषग्वरैः । गुणाः । यवतिक्ता तु
तिक्ताम्ला दीपना रुचिकृत्तथा ॥ १६७ ॥ कृमिकुष्ठविषघ्नी रेचनी

च निद्रोपप्लुत । प्रोक्ता ' राजनिघंटे ' च वैद्यविद्याविशारदैः ॥ १६८ ॥
रसेपाके च मधुरा सुदराानाहनुद्रणे । २३. ईश्वरी, रुद्रजटा । रौद्री जटा
रुद्रजटा रुद्रा सौम्या सुगंधिका ॥ १६९ ॥ सुवहा चेश्वरी चैव धना
रुद्रलता तथा । सुगंधपत्रा सुरभी सुपत्रा च सुराह्वया ॥ १७० ॥
रुद्राणी पत्रवल्ली च जटावल्ली महाजटा । नेत्रपुष्करनामा च जटा रु
द्रेति विंशति ॥ १७१ ॥ सप्रोक्ता भिषजां श्रेष्ठैः ' राजनाम्नि निघंटके '।
गुणा । रसे कटुस्त्वीश्वरी च श्वासकासहरा 'नृपे' ॥ १७२ ॥ हृद्रोगभूत-
विद्रावी राक्षसानां निबर्हणी । २४. ज्योतिष्मती । म. मालकांगोणी ।
ज्योतिष्मती स्वर्णलता विख्याता चतुलप्रभा ॥ १७३ ॥ ज्योतिर्लता तु
कटभी पिंगला तदनंतरम् । क्षमा मेध्या च मतिदा दुर्जरा च सर-
स्वती ॥ १७४ ॥ अमृता चैव संप्रोक्ता ' राजनाम्नि ' निघंटके । सुवर्ण-
लतिका चैव ज्योति कायाग्निभासर्वा ॥ १७५ ॥ लवणोक्ता दुर्मरेति
' धन्वतरिनिघंटके '। कगुनिका तु फद्धीका धुदनी च वृषा तथा ॥ १७६ ॥
' कैयदेवे ' तु संप्रोक्ता ततो वन्हिरुचिस्तथा । ' द्रव्यरत्नाकरे ' चैव
भिषग्भिः परिकीर्तिता ॥ १७७ ॥ पारावतपदी चैव ज्योतिष्का तु कुकुं-
दनी । प्रोक्ता ' भावप्रकाशे ' च पंचविंशतिसंख्यका ॥ १७८ ॥ गुणा ।
ज्योतिष्मती रसे तिक्ता किंचित्कटु स्मृता जनैः । दाहप्रदा घातक-
फान् हंति प्रज्ञाप्रदायिनी ॥ १७९ ॥ मेधाग्निदीपनी प्रोक्ता ' राजनाम-
निघटके '। कषायामोहदा स्निग्धा वर्णदा व्रणपाटुहा ॥ १८० ॥ त्रिसर्प-
घ्नी ' कैयदेवे ' प्रोक्ता वैद्यैर्न संशय । श्लेष्मवातहरा चैव पाचनी प-
टुका सरा ॥ १८१ ॥ अत्युष्णा वामनी तीक्ष्णा वन्हिदा ' धन्वनामके '।
आमवातहरा प्रोक्ता ' मदने ' भिषजां वरैः ॥ १८२ ॥ गुदरोगहरा चैव
' भाये ' प्रोक्ता मनीषिभि । कंठरोगहरा हिक्कानाशिनी ' गणनामके ' ॥
॥ १८३ ॥ २५ तेजोवना । म० थोर मालकांगोणी । तेजोवती वहुरला तथैव
घनकप्रभा । तीक्ष्णा सुवर्णवल्ली त्वचणा तदनन्तरम् ॥ १८४ ॥ अग्निदीप्ता
तु तेजस्वी तथा सुरलता मता । अग्निफलाऽग्निगर्भा च कगुनी या-
यसी स्मृता ॥ १८५ ॥ तत दौल्सना चैव सुजेगा तदनन्तरम् । तीव्रा
चैव तु काकांटी तथैव वायमार्दनी ॥ १८६ ॥ शीलंता शीलता सौम्या
माक्षी स्वर्णकिंशुका । पारावतपदी पीना पीतनैगा यशस्विनी ॥ १८७ ॥

मेध्या मेधावती धीरा प्रोक्ता ' राजनिघंटके ' । तेजोव्हा तेजनी शीता अशोघ्ना वल्कला तथा ॥ १८८ ॥ पारिजाता महौजस्वी प्रोक्ता ' धन्वंतरौ ' ध्रुवम् । काकांडकी रुक्षफला वेगा काकादनी तथा ॥ १८९ ॥ पिण्या कूटत्वचा चेव " केयदेवे " प्रकीर्तिता ॥ १९० ॥ २६. श्वेतगिरिकर्णी । म० पांढरी गोकर्णी । अश्वखुराऽद्रिकर्णी च कटभी दधिपुष्पिका । गर्दभी शीतपुष्पी च श्वेतस्पंदापराजिता ॥ १९१ ॥ श्वेतभद्रा सुपुष्पी च विषहन्त्री तदुत्तरम् । नागपर्यायकर्णी च अश्वाऽऽह्वादिखुरी तथा ॥ ॥ १९२ ॥ प्रोक्ता ' राजनिघंटे ' तु भिषक्शास्त्रपरायणैः । श्वेतपुष्पी तु श्वेता च तथैव गजकर्णिका ॥ १९३ ॥ श्वेतनामा तथा प्रोक्ता 'धन्वंतरिनिघंटके'। श्वेतस्पन्दा विषघ्नीकाऽभेदा च ' केयदेवके ' ॥ १९४ ॥ शीताऽपराजिता चेव तथेव मोहनाशिनी । प्रोक्ता मदनपाले तु भिषक्शास्त्रविशारदैः ॥ १९५ ॥ अस्फोटा विष्णुक्रांता च प्रोक्ता ' भावप्रकाशके ' । तथा ' गणनिघंटे ' च वाजिखुरा प्रकीर्तिता ॥ १९६ ॥ पंचविंशतिसंख्याका संप्रोक्ता भिषजां वरैः । गुणाः । श्वेता तु गिरिकर्णी स्यात् हिमा तिक्ता च पित्तनुत् ॥ १९७ ॥ चक्षुष्या विषहा प्रोक्ता त्रिदोषशमनी ' नृपे ' । ग्रहणी कडमूलघ्नी कुष्ठमेहामनाशिनी ॥ १९८ ॥ व्रणशोफहरा प्रोक्ता ' केयदेवनिघंटके '। सूर्धशूलहरा चेव सरा स्यात् ' द्रव्यनामके ' ॥ १९९ ॥ ग्रहघ्नी ' मदने ' प्रोक्ता कंठरोगहरा 'तथा' । हिमवीर्या मदा स्निग्धा वातपित्तहरा 'स्मरे ' ॥ २०० ॥ २७ महानीला । म. निळी सुपली । महानीला नीलपुष्पा गिरिकर्णी गवादनी । व्यक्तगंधा निलस्पंदा प्रोक्ता ' राजनिघंटके ' ॥ २ ॥ उग्रगंधा वह्निवाता प्रोक्ता ' धन्वंतरौ ' ध्रुवम् । महाश्वेता पाणिनी च धर्षा च विभवाशिका ॥ २ ॥ ' केयदेवे ' भिषक्श्रेष्ठैर्गदिता नेव संशय । महाकृष्णा नीलपुष्पा ' द्रव्यरत्नाकरे ' स्मृता ॥ २०३ ॥ अव्यक्तकृष्णा वशी स्निग्धा ( ? ) रक्ता तथा । प्रोक्ता ' गणनिघंटे च भिषग्विद्याविशारदैः ॥ २०४ ॥ सर्वा षोडशसंख्याका भिषग्भिः परिकीर्तिता ॥ गुणाः । नीली तु गिरिकर्णी स्यात्तिक्ता च शिशिरा तथा ॥ २०५ ॥ रक्तातिसार हंत्री च ज्वरदाहहरा तथा । उन्मादमदहृत् श्वासकासच्छर्दिहरा ' नृपे ' ॥२०६॥ पापकृष्णक्षयहरा पित्तजंतुहरा तथा । ग्रहघ्नी कंठरोगघ्नी प्रोक्ता

नाम्नी ' केयदेवे ' प्रकीर्तिता । नखगधा ग्रसनी च अजाजी ' गणनामक '
॥ २२६ ॥ गुणा । वस्ताम्नी स्यात्कटुरसा वातदोषविनाशिनी । सुबीज-
गर्भजननी कीर्तिता भिषगुत्तमैः ॥ २२७ ॥ बीजदा गर्भजननी प्रोक्ता
' राजनिघण्टके '॥ अन्येगुणास्त्वपर्युक्तास्तस्मादत्र न वक्ष्यते ॥ २२८ ॥ लघु
तिक्ता कषाया च मधुरा च हिमा तथा ॥ कटुपाका श्लेष्मापित्तनाशनी
वातकोपनी ॥ २२९ ॥ ' केयदेवे ' निघण्टे च प्रोक्ता वैद्यविचक्षणैः । ३१
मामवल्ली । म०॥ रानशेर॥ सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता ॥ २३० ॥
सोमदा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया सामक्षीरं तु सामा च यज्ञाङ्गं
तदनतर ॥२३१॥ प्रोक्ता 'राजनिघण्टे' च भिषक्शास्त्रविशारदैः । यज्ञसेना
' मदनके ' प्रोक्ता वैद्यविशारदैः ॥ २३२ ॥ ' भावप्रकाशे ' सामाख्या
सस्मृता भिषजा वरैः ॥ २३३ ॥ धन्वतरः परा लता पक्षलमी पक्षिप्रिया ।
महायशा महार्या च श्येनदूता मखप्रभु ॥ २३४ ॥ भद्री तु विशदा चैव
तथैव रुदरस्तरा॥ यज्ञा चैव हि समोक्ता ' केयदेवे ' भिषग्वरैः ॥ २३५॥
श्येनाहृतश्चक्रतरमहार्णी यज्ञनातृका । प्रोक्ता ' गणनिघण्टे ' च भिषग्वरैः-
कोनसप्तका ॥ २३६ ॥ गुणा । सामवल्ली कटु शीता मधुरा पित्तदाहनुत् ।
तृष्णोपविषनाशनी प्रोक्ता वैद्यविचक्षणैः ॥ २३७ ॥ ३२ मातसामा । म
रानशेर-भेद । सोमवल्लीभेदस्तु सा प्रोक्ता माहेयवल्लिरा । सौम्या महि-
षवल्ली च प्रतिसोमाप्रवल्लिका ॥ २३८ ॥ काडशाखाऽपत्रवल्ली प्रोक्ता
' राजनिघण्टके ॥ २३९ ॥ षदसख्यामुनिभिः प्रोक्ता वैद्यशास्त्रविचक्षणैः ।
रसवीर्यविपाके च सोमवल्लीसमा स्मृता ॥ २४० ॥ मेषकुष्ठगुणैः प्रोक्ता
धातुसाम्यकरा तथा । सोमवल्ली सप्तगुणा प्रोक्ता महिषवल्लिका ॥२४१॥
३३ वत्सादनी । म चासनवेल । वत्सादनी सोमवल्ली विकाता मोचका-
भिधा । पाताल्गरुडी तार्क्षी सौपर्णी गरुडी तथा ॥ २४२ ॥ महाबला
दीर्घकाडा दीर्घवल्ली ततुत्तरम । तथा दृढलता चैव प्रोक्ता ' राजनिघ-
ण्टके ' ॥ २४३ ॥ सुदर्शना च चक्राका तथैव मधुपर्णिका । वद्ध्याली
(?) मेचका च ' केयदेवे ' प्रकीर्तिता ॥ २४४ ॥ छिन्नी महाजना चैव
छिन्ना छिन्ना तथैव तु । ' द्रव्यरत्नाकरे ' चैव प्रोक्ता विंशतिसंख्यया
॥ २४५ ॥ गुणा । वत्सादनी तु मधुरा पित्तदाहाखनाशिनी । वृष्या मत

र्पणी कच्या विषदोषनिवारिणी । प्रोक्ता ' राजनिघंटे ' च वैद्यविद्यावि-शारदैः ॥ २४६ ॥ उष्णशोफकफार्शोघ्नी वातहा 'कैयदेवके'। ग्राही वृष्या ' द्रव्यनामे ' कफघ्नी वायुहृत् ' नृपे ' ॥ २४७ ॥ ३४. गोपालकर्कटी । म. गोपालकांकडी । गोपालकर्कटी वन्या तथैव गोपलर्कटी । क्षुद्रेर्वारु क्षुद्र-फला गोपाली क्षुद्रचिर्भटा ॥ २४८ ॥ प्रोक्ता ' राजनिघंटे ' तु सप्तसंख्या भिषग्जनैः । गुण. । गोपालकर्कटी शीता मधुरा पित्तनाशिनी । मूत्रकृ-च्छ्राश्मरीभेदशोषहा ' राजनामके ' ॥ २४९ ॥ ३५. काकनासा ।म. थोरकाहुंडळ। काकनासा ध्वांसनासा काकतुंडी तु वायसी। सुरंगी तस्करस्नायु ध्वांक्षतुंडा सुनासिका । वायसाव्हा ध्वांक्षवल्ली काकाक्षी ध्वांसनासिका ॥ २५० ॥ काकप्राणा शिराली च प्रोक्ता ' राजनिघंटके ' । ध्वांक्षतुंड-फला ध्वांक्षी प्रोक्ता ' धन्वंतरौ ' तथा ॥ २५१ ॥ काकांगी काकसंज्ञा च चोरस्नायुशिरोचला । काकाख्या जीवनीया च ' कैयदेवे ' प्रकीर्तिता ॥ २५२ ॥ ध्वांक्षेष्टा तस्करवृक्षा ' द्रव्यरत्नाकरे ' स्मृता । काकतुंड-फला चैव प्रोक्ता ' धन्वंतरौ ' तथा ॥ २५३ ॥ शिरोवल्लेति मुनिभिः प्रोक्ता ' गणनिघंटके ' । पंचविंशतिसंख्याका प्रोच्यते भिषजां वरैः ॥ २५४ ॥ गुण. । काकनासा तु मधुरा शिशिरा पित्तनाशिनी । रसायनी दार्ढ्यकरी वलीपलितहा ' नृपे ' ॥ २५५ ॥ काकादनी । म लघुकाहुंडळ । काकादनी काकपीलु काकशिंबी तु रक्तला । ध्वांक्षादनी वक्रशल्या दुर्मोहा वायसादनी ॥ २५६ ॥ काकतुंडी ध्वांक्षनखी वायसी काकदंतिका । ध्वांक्षदंतीति विदिता प्रोक्ता ' राजनिघंटके ' ॥ २५७ ॥ वक्र-शल्या काकणती प्रोक्ता ' धन्वंतरौ ' तथा । पंचभूनरयका प्रोक्ता पुरातनचिकित्सकैः ॥ २५८ ॥ गुण. । काकादनी कटूष्णा च तिक्ता चैव रसायनी । वातदोषहरा रुच्या वलीपलितस्तंभिनी ॥ २५९ ॥ प्रोक्ता ' राजनिघंटे ' च पुरातनचिकित्सकैः । केश्या शिरोदोषहरा ग्रहहा ' द्रव्यनामके ' ॥ २६० ॥ कषाया च रसे पाके कटुः स्यात्कफनाशिनी । शोफदाहा च वमनी चित्रकुष्ठविनाशिनी ॥ २६० ॥ ' कैयदेवनिघंटे ' च प्रोक्ता वैद्यविचक्षणैः । ३७ रक्तगुंजा । म. तांबडी गुंज । गुंजा सौम्यशिखंडी च कृष्णला त्वम्णा तथा ॥ २६१ ॥ ताम्रिका शीनपाके च उच्चटा दृ-

ध्वाङ्क्षचूडिका । रक्ता तु रक्तिका चैव किंभोजी भिल्लभूषणा ॥ २६२ ॥ एषा ' राजनिघंटे ' तु संप्रोक्ता भिषजां वरै- । चटकी काकसाह्वा च प्रोक्ता ' धन्वन्तरौ ' तथा ॥ २६३ ॥ ततस्तु कृष्णकांबोजी तथैव काकमंलिका । प्रोक्ता ' गणनिघंटे ' तु पुरातनचिकित्सकैः ॥ २६४ ॥ कृष्णकातरकातुडी ' कैयदेवे ' स्मृता बुधैः । शिखंडिका काकणती ' द्रव्यरत्नाकरे ' स्मृता ॥ २६५ ॥ काकघ्नीच्यगारवल्ली प्रोक्ता 'भावप्रकाशके' चक्रलाऽमरकोशे तु कविभिः परिकीर्तिता ॥ २६६ ॥ चूडामणी तु वन्या च तथा श्यामलचूडिका । प्रोक्ता ' राजनिघटे ' तु कविभि समर्थिताति ॥ २६७ ॥ ३८ श्वेतगुञ्जा । श्वेतगुंजाभिरिंद्रिका लक्ष्मकाकादनी तथा । काकपीलुस्तु वक्रशल्या प्रोक्ता ' राजनिघंटके ॥ २६८ ॥ ' धन्वंतरिनिघंटे ' तु प्रोक्ता शीतोच्चटा ध्रुवम् । श्वेतपाकी तु चूडाला दुर्भोपा चनिका तथा ॥ २६९ ॥ चूडा च घमशल्येति ' कैयदेवे ' प्रकीर्तिता । चडा तु दुर्मुखा चैव ' द्रव्यरत्नाकरे ' स्मृता ॥ २७० ॥ ततो ' मदनपाले ' तु दुर्मोका परिकीर्तिता । बालभंडी निरटीया प्रोक्ता ' गणनिघंटके ' ॥ ॥ २७१ ॥ ततस्तु श्वेतकाभोजी ' राजमान्नि निघंटके । प्रोक्तांप्याद्वदासंख्याका भिषग्विद्याविशारदैः ॥ २७२ ॥ गुणा । गुंजाद्वय तु तीक्ष्णोष्ण बीज वांतिकरं तथा । पत्रशूलविषे हति वश्ये श्वेततूपे ' स्मृतम् ॥ ॥ २७३ ॥ वातपित्तज्वरे हति मुखशोषभ्रमापहम् । श्वासतृष्णामदान् हति रक्तार्बुदविनाशनम् ॥ २७४ ॥ ' भावप्रकाशे ' संप्रोक्त पुरातनभिषग्वरैः । रम्ये तिक्ता कषाया च कफपित्तापहारिणी ॥ २७५ ॥ चक्षुष्या शुक्रला केश्या रक्षत्वग्बलदायिनी । इन्द्रलुप्तहरा चैव मदमोहप्रहा तथा । रक्षोग्रह विष हति कंडुकुष्ठव्रणापहम् । ' धन्वंतरिनिघंटे ' च संप्रोक्त वैद्यनायकैः ॥ २७६ ॥ ३९ वृद्धदारु । धारा । अजेगी वृद्धदारु च जुगशी दीर्घतालुक । वृद्धपुष्पी स्वर्जांत्री च तथैव छांगलांत्रिका ॥ २७७ ॥ जीर्णदारु जीर्णफजी सुपुष्पी त्वजरा तथा । सूक्ष्मपर्णो भिषक्श्रेष्ठैः प्रोक्ता ' राजनिघटके ' ॥ २७८ ॥ जनुका चैव संप्रोक्ता ' धन्वंतरिनिघंटके ' । ' द्रव्यरत्नाकरे ' चैव जागला परिकीर्तिता ॥ २७९ ॥ नागको जीर्णनालश्च शतकोटरपुष्पिका । छागी चैव तु त्रिग्याला तथा

महिषवल्लरी ॥ २८० ॥ 'कैयदेवे 'भिषक्श्रेष्ठैः प्रोच्यते नैव संशयः। छागंडी मृदुशृंगेढीति प्रोक्ता 'भावप्रकाशके' ॥ २८१ ॥ अंतर्कोटरपुष्पी च तीरपालक एव च। एकविंशतिसंख्याका भिषग्भिः कथिता शुभम्॥२८२॥ गुण। वृद्धदारु पिच्छिला च कफवातापहारिणी। वल्या चासामदोषघ्नी प्रोक्ता ' राजनिघंटके ' ॥ २८३ ॥ रसायनं च शुक्रर्द्धिवलमेधाग्निवृद्धिकृत् ॥ २८४ ॥ स्वरकांतिकर चैव सर, शोफामवातहृत्। वातमेहकफान् हंति प्रोक्तं ' कैयनिघंटके ' ॥२८५॥ वृद्धदारुद्वयं तिक्तमुष्णं कटुसमीरितम्। श्वयथुश्लेष्मदृष्ट्यं वातोदरहर ' धन्वं ' ॥ २८६ ॥ रक्तार्शोनाशनं प्रोक्तं वैद्यै'र्मदनपालके ' ॥ ४० ॥ ताम्रवल्ली। कैवर्तिका सुरंगा च लतावल्ली द्रुमारुहा ॥ २८७ ॥ रंगिणी वस्त्ररंगा च सुभगो नदनंतरम्। ताली तमाली ताम्रा च ताम्रवल्ली तमालिका ॥ २८८ ॥ सूक्ष्मवल्ली सुलोमा च शोधनी मालिका तथा। द्विवन्हिसंख्यका प्रोक्ता भिषग्विद्याविशारदैः ॥ २८९ ॥ गुण। कैवर्ती लघुवृष्या च कषाया कफनाशिनी। मदाग्निश्वासकासांश्च हंतीति 'राजनामके' ॥२९० ॥ काडीर। म. कांडवेल। कांडीर कांडकटुको नासामवेदन पटु। अम्रकांडस्तोयवल्ली कारवल्ली सुकांडक ॥ २९१ ॥ प्रोक्ता राजनिघंटे ' तु भिषक्शास्त्रविशारदैः। धन्वंतरे, तुम्रकांडा कविभिः परिकीर्तिता ॥ २९२ ॥ कांडीरी तु कटिल्लश्च तथैव कांडकटिलकः। नासाक्षिवेदनश्चैव ' कैयदेवे ' प्रकीर्तिता ॥ २९३॥ कांडवेदनकश्चैव प्रोक्ता ' गण,निघंटके। पंचभूसंख्यका प्रोक्ता भिषक्श्रेष्ठैर्न संशय ॥ २९४ ॥ गुण। कांडीर कटुतिक्तोष्णसरः प्रोक्तस्तथैव च। व्रणगुल्मोदरप्लीहशूलकृमिविनाशकृत् ॥ २९५ ॥ अग्निप्रदीपक प्रोक्तो ' राजनामनिघंटके। वातशलहरश्चैव ' द्रव्यनामनिघंटके, ॥ २९६ ॥ कफपित्तकृमीकुष्ठान् हंतीति ' गणनामके ४१. जंतुका। उत्तरदेशे पत्राजली। जंतुका जंतुकारी च जननी चक्रवर्तिनी ॥ २९७ ॥ निर्यकफला निशांधा च बहुपत्री सुपत्रिका। राजवृक्षा जनेष्टा च कपिकच्छुफलोपमा ॥ २९८ ॥ रंजनी सूक्ष्मवल्ली च भ्रमरी कृष्णवल्लिका। निऊलिका कृष्णरहा ग्रथिपर्ण सुगत्निका ॥ २९९ ॥ तरजल्ली दीर्घफला प्रोक्ता 'राजनिघंटके ' सहर्षप्रेतुकश्चैव प्रोक्ता ' धन्वंतरौ , भुरम ॥ ३०० ॥ जतुकृष्णा तु मरपर्णी

प्रोक्ता मुरनी 'रामनामके'। ५० पलाशी । म० पळशी । पलाशी पत्र-वल्ली च पर्णवल्ली तथैव च ॥ २३४ ॥ सुपर्णी सुपर्णी च दीर्घवल्ली विषादनी । अम्लपत्री दीर्घपत्री रसाम्ला तदनंतरम् ॥ २३५ ॥ अम्ली अम्लातकी चैव काञ्चिका च पलाशिका । प्रोक्ता 'राजनिघंटे' तु चतुर्दश-भिषग्वरैः ॥ २३६ ॥ गुणाः । पलाशी मधुराम्ला च मुखदोषविनाशिनी । अरोचकहरा पथ्या पित्तकोपकरी 'नृपे' ॥ २३७ ॥ इति सिद्धेश्वरकृत-राघवविरचिते गुडूच्यादि—प्रथमवर्गः समाप्तः ।

## २. शताव्हादि वर्ग.

१. शताव्हा । म० बाळंतशोप । गु० सुवा । शताव्हा शतपुष्पा च मिशिर्घोषा तु पोतिका । अहिच्छत्रा सुवाक्पुष्पी माधवी कारवी शिफा ॥ २३८ ॥ संघातपत्रिका छत्रा वज्रपुष्पा सुपुष्पिका । शतप्रसूना ब-हुला पुष्पाव्हा शतपत्रिका ॥ २३९ ॥ वनपुष्पा भूरिपुष्पा सुगंधा सुवस-पत्रिका । गंधाधिकातिछत्रा च प्रोक्ता 'राजनिघंटके' ॥ २४० ॥ अ-वाक्पुष्पी घोषवती शफा च तदनंतरम् । मधुरा योनिदोषघ्नी मागधी च शाटा तथा ॥ २४१ ॥ 'कैयदेवनिघंटे' तु संप्रोक्ता भिषजा वरैः । शाका शताव्हाऽवाक्पुष्पी चैटिका चेति मागधा ॥ २४२ ॥ पणा 'मदनपाले' तु भिषग्भिः परिकीर्तिता । तथा संहतपत्री च शिवछत्रा ततः परम् ॥२४३॥ 'भावप्रकाशे' संप्रोक्ता भिषक्शास्त्रविशारदैः । अधःपुष्पा मधुरमा सेव्रा संहतपत्रिका ॥ २४४ ॥ प्रोक्ता 'गणनिघंटे' तु चतुश्चत्वारिंशत्प्र-का । शताव्हा कटु तिक्ता च स्निग्धा श्लेष्मानिलारमित् ॥ २४५ ॥ ज्वरनेत्रव्रणार्तिहृद्वस्तिहृद् 'द्रव्यनामके'। श्लेष्मवातहरा चोष्णा संप्रोक्ता 'धन्वनामके' ॥ २४६ ॥ पित्तघ्ना कफपित्तघ्नी मेध्या च लघु दीपनी । शूलदाहज्वरतृष्णागुल्मयोनिकृमा हरा ॥ २४७ ॥ 'द्रव्यरत्नाकरे' चेयं भिषग्भिः परिकीर्तिता । २ मिश्रेया । म० बडीशोप । गु० वरियाळी । मिश्रेया तालपर्णी च तालपत्री मिशी तथा ॥ २४८ ॥ शालेया च शीतशिवा शालिका वनजा तथा । अवाक्पुष्पी च मधुरा छत्रा संहतम्

वातश्लेष्महरा रुच्या नानानेत्ररुजापहा ॥ १८३ ॥ ८ कंटकारी । म० रिंगणी । गु० बेठी भोरिंगणी । कंटकारी कंटकिनी दुःस्पर्शा तु महर्षिणी । क्षुद्रा व्याघ्री निदिग्धा च द्राविणी क्षुद्रकंटका ॥ १८४ ॥ बहुकंटा क्षुद्रकंटा तथा कंटालिका मता । तत्र क्षुद्रफला चैव प्रोक्ता 'राजनिघंटके' ॥ १८५ ॥ 'धन्वन्तरौ' धावनीति 'कैयदेवे' प्रचोदनी । बहुगुडाकुली चैव वार्ताकी तदनंतरम् ॥ १८६ ॥ स्पृशी च राष्ट्रिकी चैव प्रोक्ता 'ह्यमरकोशके' । गुणाः । कंटकारी कटूष्णा च दीपनी श्वासकासहा ॥ १८७ ॥ प्रतिश्यायश्लेष्मवातज्वरहा 'राजनामके' । आमवातारुचिहरा कासहृद्रोगहा 'धने' ॥ १८८ ॥ तिक्ता रूक्षा भेदिनी च पाचनी पार्श्वरोगजित् । कृच्छ्रपीनसहन्त्री च मलघ्नी कटूष्णका ॥ १८९ ॥ फलगुणाः । भेदनं रोचनं हृद्यं तिक्तं पित्ताग्निकृत्तथा । कफवायुकंडूकासमेहकृमिज्वरापहा ॥ १९० ॥ 'कैयदेवे' भिषक्श्रेष्ठैः 'द्रव्ये' चैव मता स्मृता । आस्यवैरस्यहन्त्री च ग्राही कुष्ठविनाशिनी ॥ १९१ ॥ शूलाग्निमांद्यहा प्रोक्ता वैद्यैः 'भावप्रकाशके' । ९ लक्ष्मणा । म० पांढरी रिंगणी । गु० धोळी भोरिंगणी । क्षेत्रदूती तु श्वेता च लक्ष्मणा सितसिंहिका ॥ १९२ ॥ सितक्षुद्रा सिता छिन्ना क्षुद्रवार्ताकिनी तथा । बहुवार्ताकिनी चैव क्षेत्रजा कण्टेश्वरी ॥ १९३ ॥ निस्नेहफलिका रामा सितकंटा महौषधी । गर्दभी चंद्रिका शाकी चंद्रपुष्पा प्रियंकरी ॥ १९४ ॥ नाकुली दुर्लभा रास्ना प्रोक्ता 'राजनिघंटके' । कामघ्नी क्षुद्रपात्रा च किण्वा तु कपटा तथा ॥ १९५ ॥ मालिना मलिनांगी च छिन्नदूती रुताग्निनी । बहुपत्रा महर्षीका कुमती तदनंतरम् ॥ १९६ ॥ 'धन्वन्तरिनिघंटे' तु समोक्ता भिषजा वरैः । चंद्रपुष्पी तु वनजा धूर्ता च दूतिका तथा ॥ १९७ ॥ श्वेतलक्ष्मा 'कैयदेवे' भिषग्भिः परिकीर्तिता । चंद्रहासेति मुनिभिः प्रोक्ता 'मदनपालके' ॥ १९८ ॥ गर्भदा भद्रदा चन्द्रा प्रोक्ता 'भावप्रकाशके' । चत्वारिंशत्त्रयश्चैव संख्या मात्रा भिषग्जनैः ॥ १९९ ॥ गुणाः । श्वेता तु कंटकारी च रुच्योक्ता

कफवातनित् । वसुष्या दीपनी प्रोक्ता तथा रसनियामिका ॥ ४०० ॥ 'राजनामनिघटे' च 'द्रव्ये' स्याद्गर्भकारिणी । पार्श्वपीडाहरा चैव मता 'भावप्रकाशके' ॥ ४०१ ॥ तत्रैव तत्फलगुण शक्रोरचनमित्यपि । १० पृष्ठिपर्णी । म० पिठवण, राजभाल, शेवरा । गु० नहानो समेरवो, पिठवण । कलशी पृश्निपर्णी च तथैव च महागुहा ॥४०२॥ शृगालविन्ना धमनी मेखला लाङ्गुली गुहा । क्रोष्टपुच्छी च शृगाली सिंहपुच्छी तथैव च ॥ ४०३ ॥ पृथक्पर्णी दीर्घपर्णी दीर्घा क्रोष्टुकमेखला । चित्रपर्ण्युपचित्रा च श्वपुच्छा तदनन्तरम् ॥ ४०४ ॥ प्रोक्ता 'राजनिघटे' तु भिषक्शास्त्रविशारदैः । अघ्री शृगालविन्ना च बलापर्णी तु क्रोष्टुका ॥४०५ ॥ कपित्थका धावनीति 'धन्वन्तरिनिघटके' । क्षीतनी घातनी चैव स्निग्धपर्णी तथैव च ॥४०६ ॥ 'कैयदेवे' भिषक्श्रेष्ठैः समोक्ता चैव सहाय । शृगालवृन्ना जटिला प्रोक्ता 'मदनपालके' ॥ ४०७ ॥ अग्निपर्णी क्रोष्टुवन्ना प्रोक्ता 'भावप्रकाशके' । शृगालविन्न्या पर्णी तु तथैव क्रोष्टुपुच्छिका ॥ ४०८ ॥ प्रोक्ता 'गणनिघटे' तु वैद्यवन्हिभिषा ध्रुवम् । गुणा । पृष्ठिपर्णी कटूष्णाम्ला तिक्ता कासातिसारजित् ॥ ४०९ ॥ वातज्वरव्रणोन्मादरदाहहा 'राजनामके' । रक्तपित्तहरा रूक्षा हिक्काहा 'गणनामके' ॥ ४१० ॥ त्रिदोषज्वरकासघ्नी 'द्रव्यरत्ने' प्रकीर्तिता । रक्तातिसारहन्त्री च लघु वृष्या तृषापहा ॥ ४११ ॥ दाहवातिहरा प्रोक्ता वैद्यैः 'मदनपालके' । 'भावप्रकाशे' समोक्ता वृष्या च मधुरा रसा ॥ ॥ ४१२ ॥ श्वासहन्त्रीति विज्ञेया वैद्यैर्विद्याविशारदैः । ११ गोसूरक । म० गोखरू । गु० गोखरू । गोक्षुरको गोक्षुरक क्षुरागश्च श्वदंष्ट्र ॥ ४१३ ॥ कटकी भद्रकन्टश्च व्यालदंष्ट्र क्षुरस्तथा । ततश्च कमराश्चैव दुश्चक्रम महांगको ॥ ४१४ ॥ प्रोक्ता 'राजनिघटे' च रुद्रसंख्या भिषग्जनैः । १२ वनशृंगाटक । म० सराटे । गु० गोखरू । ततो गोक्षुरकश्चैव तथा कटी त्रिकटक ॥ ४१५ ॥ षडगो बहुकटश्च क्षुरो गोकटकस्तथा । पक्कणा कटफल्स्तनु क्षुद्रक्षुरस्तथा ॥ ४१६ ॥ तथैव

वातपित्तकफास्रघ्नो 'गणे' प्रोक्ता भिषग्जनैः ॥ ४३३ ॥ १४ वासकः।
म० अडुळसा। गु० अरडुशी। वासकः सिंहिका वासा भिषङ्माता वसा-
दनी। अटरूषः सिंहमुखी सिंही कंठीरवी वृषा॥४३४॥शितकर्णी वाजिदंता
नासा पंचमुखी तथा। सिंहपर्णी मृगेंद्राणी प्रोक्ता 'राजनिघंटके' ॥४३५॥
सिंहास्या शितनखी च मातृका सिंहवल्लभा। वाददंती? भिषक्श्रेष्ठैः 'कै-
यदेवे' प्रकीर्तिता ॥ ४३६॥ सिंहकश्च महद्भिः प्रोक्तो 'मगनिघंटके'।
सिंही 'त्वमरकोशे' च त्रयोविंशतिसंख्यकाः ॥ ४३७ ॥ वासा तिक्ता
कटुः शीता कासघ्ना रक्तपित्तहा। कफज्वरक्षयश्वासनाशनी 'राजनामके'
॥ ४३८ ॥ ऊर्ध्वासृक्पित्तहंत्रीति 'गणे' प्रोक्ता चिकित्सकैः। हृच्छर्दि-
कुष्टहंत्री च तृषाहा 'धन्वनामके' ॥ ४३९ ॥ ज्वरमेहारुचिघ्नी च वा-
तला कफनाशिनी। 'कैयदेवे' भिषक्श्रेष्ठे 'द्रव्ये' मेहविनाशिनी ॥
॥ ४४० ॥ १५ शितिवार। म० कुरडू। गु० लांबडी। शितिवारः
शितवरः सूच्यान्हः सूचिपत्रकः। श्रीवारकः शिखी चक्षुः स्वस्तिकः सु-
निषण्णकः ॥ ४४१ ॥ सूचीदला कुक्कुटश्च ततः श्वेतावरस्तथा। मेघारूच्
ग्राहकश्चैव कुक्कुरस्तदनंतरम् ॥ ४४२ ॥ प्रोक्तो 'राजनिघंटे' तु भि-
षक्शास्त्रविशारदैः। शीतिवारः सनिषण्णस्तद्धसीवारको वनी ॥४४३॥
कुंटिका क्षेत्रभूषा कुंटी शीर्षमंजरी। श्रीहस्तिनी सिंहकेशी चुचकः
क्षेत्रनाशिनी ॥ ४४४ ॥ कृष्णसूक्ष्मपुला चैव 'कैयदेवे' प्रकीर्तिता। भ-
केडी हस्तिनी चैव श्वेतवारक एव तु ॥ ४४५ ॥ 'द्रव्यरत्नाकरे' चैव
प्रोक्ता पूर्वचिकित्सकैः। पूर्णाकश्च भिषक्श्रेष्ठैः प्रोक्तो 'भावप्रकाशके'
॥ ४४६ ॥ एकत्रिंशत्संख्यका च प्रोक्तेयं भिषजां वरैः। गुणाः। शि-
तिवारा च संग्राही कषायोष्णा त्रिदोषनुत् ॥ ४४७ ॥ मेहारुचिज्वरहरा
दाहहा 'राजनामके'। रूक्षा वृष्या गुल्मश्चैव तथा मारुतपित्तकृत्॥४४८॥
विषश्वयथुनाशा च बस्तिवातहरा तथा। कृच्छ्राश्मककफघ्नश्च प्रोक्ता
'कैयनिघंटके' ॥ ४४९ ॥ 'द्रव्ये' तु कफवातघ्नो वन्हिकृच्च मरा
स्मृता। १६ क्षुद्र-दुरालभा। म० लहान धमासा। गु० ल-

ह्मनो धमासो । करभा दुनिका चैव तथैव करभप्रिया ॥ ४५० ॥ ग्राहिणी फणिद्रुर् चैव कषाया चोष्ट्रमासिका । अनादन्यनभक्षा च तथैव च विशाग्दा ॥ ४५१ ॥ कृच्छ्ररा फणिहारी च सूक्ष्मपत्रा मरुद्भवा । विरूपा मरुजा जाता कषायी 'गणनामके' ॥ ४५२ ॥ एकोनविंशति प्रोक्ता पुरातनचिकित्सके । गुणाः । सुद्दा दुरालभा चाम्ला ज्वरकुष्ठविनाशिनी ॥ ४५३ ॥ श्वासकासभ्रमघ्नी च तथा पारदशुद्धिदा । १७ दुरालभा । म० धमासा, काटेचुबुक । गु० धमासो । धन्वयासो दुरालभा ताम्रमूली च कच्छुरा ॥ ४५४ ॥ दुराल्भा च दुःस्पर्शा धन्वी धन्वयवासका । प्रबोधनी सूक्ष्मदला विरूपा दुरभिग्रहा ॥ ४५५ ॥ दुर्लभा दुःप्रधर्षी च प्रोक्ता 'राजनिघंटके' । यासा तु कटरा चैव प्रोक्ता 'धन्वंतरौ' ध्रुव ॥ ४५६ ॥ तथा 'मदनपाले' तु यासकेति स्मृता बुधैः । भासा 'गणनिघंटे' च प्रोक्ता त्वष्टादशैव तु ॥ ४५७ ॥ गुणाः । दुरालभा कटुस्तिक्ता वातपित्तज्वरापहा । उष्णा गुल्मप्रमेहघ्नी प्रोक्ता 'राजनिघंटके' ॥ ४५८ ॥ १८ अग्निदमनी । म० आगीदवणा । गु० आगियो धमासो । ततोऽग्निदमनी चैव बहुकटा तथैव च । वल्लिकंगारिका चैव तद्वत् गुच्छफला तथा ॥ ४५९ ॥ तत क्षुद्रफला चैव क्षुद्रकंटारिका तथा । तथैव क्षुद्रदुःस्पर्शा दमनी तदनन्तरम् ॥ ४६० ॥ महेन्द्रमाता विदिता प्रोक्ता 'राजनिघंटके' । दशसंख्या भिषग्भिस्तु प्रोच्यते नैव संशयः ॥ ४६१ ॥ गुणाः । अग्निदमनी वह्नी चोष्णा रुक्षा तथैव च । रुच्या वातकफघ्नी च हृद्या च दीपनी तथा ॥ ४६२ ॥ गुल्मप्लीहहरा प्रोक्ता 'राजनामनिघंटके'॥ १९ बाकुची । म० बावची । गु० बावची । बाकुची सोमराजी च सोमवल्ली सुवल्लिका ॥ ४६३ ॥ सिता सितावरी चैव चन्द्रलेखा च चंद्रिका । सुप्रभा कुष्ठहन्त्री च कालमेषी पूतिगंधिका ॥ ४६४ ॥ अवल्गुजा चाद्रसंज्ञा राजी च तदनन्तरम् ॥ ऐन्द्री कालमेषी च त्वग्दोषघ्नी तथैव तु ॥ ४६५ ॥ तत कृष्णफला चैव वल्गुजा च प्रभा तथा । वाकुची चैव विदिता 'राजनामनिघंटके' ॥ ४६६ ॥ पूतिफला

चंद्रलेखा प्रोक्ता 'धन्वंतरौ' ध्रुवं । तत्रस्तु चंद्रशकल्या चंडरी चांद्रिका तथा ॥ ४६७ ॥ जीवना मलयू चैव इंदुराट् कालमेपिका । सोमखंडा सुवर्चीका 'कैयदेवे' प्रकीर्तिता ॥ ४६८ ॥ तथा 'मदनपाले' तु वरा प्रोक्ता मनीषिभिः । अहिद्रो कुष्ठहरिः प्रोक्ता 'राजनिघंटके' ॥४६९॥ चत्वारिंशत् संख्यकानि संप्रोक्ता भिषजां वरैः । गुणाः। वाकुची कटुतिक्तोष्णा कृमिकुष्ठकफापहा ॥ ४७० ॥ प्रोक्ता 'राजनिघंटके' च वैद्यविद्याविचक्षणैः । तत्फलं पित्तलं कुष्ठकफानिलहरं कटु ॥ ४७१ ॥ 'कैयदेवे' भिषक्श्रेष्ठैः' संप्रोक्तं नैव संशयः । 'द्रव्यरत्नाकरे' प्रोक्तं वायजंतुविनाशकृत् ॥ ४७२ ॥ तत्कल्कं श्वेतकुष्ठघ्नं कफवातहरं 'गणे' । केश्यं शोथामपोट्टघ्नं कल्कं 'भावप्रकाशके' ॥ ४७३॥ त्वग्दोषविषकृच्छ्रघ्नं सर्वनाशकरं स्मृतं । 'धन्वंतरिनिघंटे' च प्रागहंत प्रकीर्तितं ॥ ४७४ ॥ दीपनी मधुरा रूक्षा रुच्या हृद्या तथैव च । विष्टंभी च परा मेध्या रक्तपित्तकफापहा ॥४७५॥ श्वासकासकृमीमेह*ज्वरदंत्रीति 'कैयके' । २०

शाणपुष्पी । म० खुळखुळा । गु० शणपुष्पी । शणपुष्पी बृहत्पुष्पी शणिका शणघंटिका ॥ ४७६ ॥ पीतपुष्पी स्थूलफला कोमला माल्यपुष्पिका । प्रोक्ता 'राजनिघंटे' तु पुरातनचिकित्सकैः ॥ ४७७ ॥ महाशणा घमनी च तथैव कटुतिक्तका । 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजांवरैः ॥ ४७८ ॥ घंटारवाल्पघंटीका घंटा शणपुष्पिका । 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ४७९ ॥ 'द्रव्यरत्नाकरे' चैव त्वची प्रोक्ता मनीषिभिः । घावनी स्थलघंटा च पुष्पीका 'पट्टे' स्मृता॥४८०॥ घंटा तु रागघंटेति प्रोक्ता 'भावप्रकाशके' । एकविंशतिसंख्याका संप्रोक्ता भिषजां वरैः ॥ ४८१ ॥ गुणाः। शणपुष्पी रसे तिक्ता कषाया कफवातजित् । अजीर्णज्वरदोषघ्नी च वमनी रक्तदोषनुत् ॥ ४८२ ॥ 'राजनामनिघंटे' च भिषग्भिः परिकीर्तिता । त्रिदोषघ्ना 'द्रव्यरत्ने' संप्रोक्ता भिषजां वरैः ॥ ४८३ ॥ यातघ्नी कंठरोगमुखरोगहरा 'घने' । कफपित्तहरा प्रोक्ता 'कैयदेवनिघंटके' ॥ ४८४ ॥ २१ लघुशणपुष्पी । म०

* पाठान्तर—ज्वरोपघ्नानि इति हेतोः द्विवार वा ?

मालविदृश्चिका । ' द्रव्यरत्नाकरे ' प्रोक्ता वद्यविद्याविचक्षणैः ॥ ९१६ ॥ हृद्रोगवातगुल्मघ्नी प्लीहहा ' धन्वनामके ' । रसे पाके तु तिक्ता च कृच्छ्रमेहविनाशिनी ॥ ९१७ ॥ कफानिलहरा चैव वातरक्तहरा तथा । उदावर्तमवातघ्नी गरहा ' कैयदेवके ' ॥ ९१८ ॥ मोहभ्रमत्रिदोषघ्नी प्रोक्ता 'मदनपालके' । वातोद्भवरुजघ्नी च रोचिनी 'भावनामके '॥ ९१९ ॥ २९ महानीली । म० मोठी नीळ । गु० मोटी गळी । महानीला मला चैव तुल्या श्रीफलिका तथा । राजनीली तु मेला च केशार्हा भृशपत्रिका ॥ ९२० ॥ प्रोक्त ' राजनिघं ' तु वमनं ता भिषग्जनैः । गुणा । महानीली गुणाढ्या स्याद्राज्ञश्रेष्ठ तु वीर्यदा ॥ ९२१ ॥ पूर्वोक्तनीलिका देशा सगुणा सर्वकर्मसु । ३० गोजिह्वा । म० पाथरी । गु० भोपाथरी । गोजिह्वा खरपत्री च मतोऽन्यार्दार्विका तथा ॥ ९२२॥ अधोमुखाऽश्वपुष्पी च धेनुजिह्वा तदुत्तरम् । प्रोक्ता ' राजनिघंटे ' तु भिषक् विद्याविशारदैः ॥ ९२३ ॥ गोधुमी दार्विपत्री च दीर्विका क्षुद्रमूलिका । गोमा गाजी खरस्पर्शा भर्जिका गोजिकाजिका ॥ ९२४ ॥ ' कैयदेवे ' भिषक्श्रेष्ठैः सप्रोक्ता नैव संशयः । ' द्रव्यरत्ने ' दार्विकेति सप्रोक्ता भिषजां वरैः ॥ ९२५ ॥ गोभी तु दीर्घिका चैव तथैव खरपर्णिनी । प्रोक्ता ' मदनपाले ' तु भिषग्विद्याविशारदैः ॥ ९२६ ॥ गुणा । गोजिह्वा कटुका शीता पित्तघ्नी व्रणरोगनी । सर्वदन्तविषापघ्नी प्रोक्ता ' राजनिघंटे ' ॥ ९२७ ॥ पाके स्वादु रसे हैमा वातघ्ना ग्राहिणी तथा । कफास्रहरा हृद्या कासारुचिविनाशिनी ॥ ॥ ९२८ ॥ श्वासप्रमेहरक्तघ्नी ज्वरहा ' कैयदेवके ' । ३१ अपामार्ग । म० अघाडा । गु० अंघेडो । अपामार्गः शैखरी च निगिही खरमञ्जरी ॥ ९२९ ॥ अथ शल्या दुर्ग्रहा च प्रत्यक्पुष्पी मयूरिका । वोटकण्ठ शैखरिका मर्कटी दुरभिग्रहा ॥ ९३० ॥ पराक्पुष्पी च वशिरा कपी मर्कटपिप्पली । कण्टकारिका प्राग शबरु पंक्तिराजा ॥ ९३१ ॥ मागारु नुज्जतश्च प्रोक्ता 'राजनिघंटे' । निगही दुर्ग्रहा चैव तथा कण्ट

पिप्पली ॥ ९३२ ॥ 'धन्वंतरिनिघंटे' च संप्रोक्ता भिषजां वरैः । क्षारमध्या
मार्गदंना 'कैयदेवे' प्रकीर्तिता ॥ ९३३ ॥ क्षुद्रापामार्गचश्चैव प्रोक्ता
'गणनिघंटके' । त्रिंशत्संख्या भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥९३४॥
गुणाः । अपामार्गस्तु तीक्ष्णोष्णः कटुः कफविनाशकृत् । अर्शःकंडूदराम-
घ्नो ग्राही च विषहा तथा ॥ ९३५ ॥ रक्तहृद् वातिकृत् प्रोक्तो 'राज-
नामनिघंटके' । दीपनोथ सरश्चैव मेदानिलहरस्तथा ॥ ९३६ ॥ शूल-
सिध्मापचीकंडूदद्रुघ्नो 'कैयदेवके' । कफवातहरश्चैव 'गणे' प्रोक्तो भिष-
क्जनैः ॥ ९३७ ॥ ३२ रक्तापामार्ग । म० तांबडा अघाडा । गु०
राता अघेडो । रक्तापामार्गकश्चैव क्षुद्रापामार्ग एव च । आघट्टको दु-
र्ग्रधनिका रक्तबिल्वपत्रिका ॥ ९३८ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्-
विद्यापरायणैः । नतो रक्तफलश्चैव वशिरः कपिपिप्पली ॥ ९३९ ॥
'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजां वरैः । रक्तो रक्तफला चैव बिंदुको
वशिरस्तथा ॥ ९४० ॥ कुंटस्तु मर्कटी चैव मत्स्यकृश्रेणी खरच्छदः ।
'कैयदेवनिघंटे' च प्रोक्ता पूर्वचिकित्सकैः ॥ ९४१ ॥ धामार्गवः
केशपर्णी मत्स्यकृपर्णी तथैव च । प्रोक्ता 'भावप्रकाशे' च विंशत्संख्या
भिषक्जनैः ॥ ९४२ ॥ गुणाः । रक्तापामार्गकः शीतः कटुः कफ-
मरुत्प्रदः । व्रणकंडूविषघ्नश्च संग्राही वातिकृत् तथा ॥ ९४३ ॥ शीत-
स्वादु रसे पाके दुर्जरं वातजं तथा । रूक्षं च रक्तपित्तघ्नं विष्टंभी 'कैय-
देवके' ॥ ९४४ ॥ 'द्रव्यरत्नाकरे' प्रोक्तं वातिकृत् श्वासहारकं ।
वातकृत् 'कैयदेवे' च सर्वे फलगुणाः स्मृताः ॥ ९४५ ॥ **३३ बला ।**
म० चिकणा, लघु चिकणा । गु० बला । ओदनिका बला भद्रा समंगा तद-
नंतरम् । भद्रौदनी च कल्याणी तथैव वरकाष्ठिका ॥ ९४६ ॥ मोटा
भद्रफला चैव बलाढ्या वाटिका तथा । प्रोक्ता 'राजनिघंटे' तु भिष-
क्विद्याविशारदैः ॥ ९४७ ॥ प्रोक्ता 'मदनपाले' तु समांसा वरवा-
हिनी । वाटी महासमंगा च तथैव खरयष्टिका ॥ ९४८ ॥ ओदनाव्हा
शीतपाकी प्रोक्ता 'धन्वंतरौ' बुधैः । वाट्यालका तु वाटी च निरपुष्पी

तदुत्तरे ॥ ९४९ ॥ वाट्या पीतबला नैव 'कैयदेवे' प्रकीर्तिता ।
रुग्गा समा शीतवरा प्रतापोरिष्यका तथा ॥ ९५० ॥ प्रोक्ता 'गण-
निघंटे' तु सप्तविंशतिसंख्यका । गुणाः । बला तिक्ता च मधुरा तथा
पित्तातिसारजित् ॥ ९५१ ॥ बलवीर्यपुष्टिदात्री तद्वत् कफविशोषिणी ।
प्रोक्ता 'राजनिघंटे' च पुरातनभिषग्वरैः ॥ ९५२ ॥ तन्मूलं च त्वचा
क्षीरं शर्करामूत्रकृच्छ्रजित् । स्निग्धा हिमा स्वादु वृष्या त्रिदोषशमनी
तथा ॥ ९५३ ॥ रक्तपित्तक्षतघ्नीति प्रोक्ता 'धन्वंतरौ' ध्रुवं । रसे
पाके च मधुरा वातशोणितहा 'गणे' ॥ ९५४ ॥ ३४ बलोत्तरा ।
म० थोरला चिकणा । गु० खरेटी । बला महासमंगा च ओदनी च
वृक्षारुहा । तनो वृद्धिफला नैव तथैव क्षतनंदुहा ॥ ९५५ ॥ भुजंग-
जिव्हा शीता च तथैव शीतपाकिनी । बलाह्वया शीतवरा बल्याखीरि-
हिटी तथा ॥ ९५६ ॥ बलोत्तरा व्यालजिव्हा पंचभू 'राजनामके' ।
गुणाः । महासमंगा मधुरा त्वम्ला चैव त्रिदोषहा ॥ ९५७ ॥ ज्वरदाहहरा
प्रोक्ता वैद्ये 'राजनिघंटके' । ३५ महाबला । म० सहदेवी । गु०
सहदेवी । महाबला ज्येष्ठबला तथैव तु कटंभरा ॥ ९५८ ॥ केसरिका
केशरुहा वर्षपुष्पा मृगादनी । प्रसारणी देवबला तथैव केशवर्धिनी
॥ ९५९ ॥ सारिणी सहदेवी च पीतपुष्पी तदुत्तरम् । देवाव्हा गंधवल्ली
च मृगा मृगरसा तथा ॥ ९६० ॥ प्रोक्ता 'राजनिघंटे' तु भिषग्-
विद्याविशारदैः । बृहत्फला देवसहा तथैव तु बृहद्बला ॥ ९६१ ॥
वाट्यायनीति संप्रोक्ता भिषग्भि 'राजनामके' । नीरपुष्पी तु वाट्या
च वाट्याली तु बृहत्फला ॥ ९६२ ॥ 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता-
नैव संशय । तथा 'मदनपाले' तु नीरपुष्पा प्रकीर्तिता ॥ ९६३ ॥
महर्षी विपुला धन्या माङ्गल्यार्हा प्रसादनी । महागंधा देवदंडा तथैवो-
त्पलसंज्ञका ॥ ९६४ ॥ प्रोक्ता 'गणनिघंटे' तु पंचत्रिंशत् भिषग्जनैः ।
गुणाः । महाबला तु हृद्रोगशोफवातार्शहा तथा ॥ ९६५ ॥ शुक्र-
वृद्धिकरी बल्या विषमज्वरहा 'नृपे' । ३६ अतिबला । म०

शीतदा प्रातर्श्चैव शाणपर्णीति ' केयदे ' ॥ ६९२ ॥ ' द्रव्यरत्नाकरे ' चैव जयती परिकीर्तिता । वन्हिभूमरूपक्ता प्रोक्ता वैद्यविद्याविशारदैः ॥ ॥ ६९३ ॥ गुणा । जयती तु भवत्तिक्ता कटूष्णा वातनाशिनी । भूतापहा कटशोथी सा लष्णा च रसायनी ॥ ६९४ ॥ प्रोक्ता ' राजनिघंटे ' तु ' धन्वे ' विषत्रिदोषहा ॥ ' केमे ' पित्तकृच्छ्री च मूत्रकृच्छ्रहरा तथा ॥ ६९५ ॥ जय विवादे कुरुते प्रोक्ता वैद्यैर्न संशयः । ' द्रव्ये ' हिमा कफघ्नीति भिषग्भि परिकीर्तिता ॥ ६९६ ॥ ४८ काकमाचिका । म० कागोणी । गु० पीलुडी, वागुणी । काकमाची ध्वाङ्क्षमाची वायसाह्वा च वायसी । सर्वतिक्ता बहुफला कटुफला च रसायनी ॥ ६९२ ॥ काकमाता गुच्छफला स्वादुपाका तु सुंदरी ॥ वरा विद्राविणी चैव मत्स्याक्षी कुष्ठनाशिनी ॥ ६९३ ॥ तिक्ता च बहुतिक्तेति प्रोक्ता राजनिघण्टके । काकाह्वा चैव कट्वी तु रसायनवरा तथा ॥ ॥ ६९४ ॥ ' धन्वन्तरिनिघंटे ' तु समोक्ता भिषजांवरैः । काकमाची तु काकाता ध्वाक्षी च वाकिनी तथा ॥ ६९५ ॥ माची गुच्छफला चैव ' केये ' प्रोक्ता भिषग्वरैः । तुष्टकी कामगा चैव प्रोक्ता ' गुणनिघंटके ' ॥ ॥ ६९७ ॥ गुणा । काकमाची कटुस्तिक्ता रसोष्णा कफशुक्रदा । शोफार्श कुष्ठकृच्छ्राणि नाशिनी ' राजनामके ' ॥ ६९७ ॥ हिक्काछर्दिविनाशा च ' भावे ' नेत्रहिता स्मृता । रसायनी निद्रापघ्नी प्रोक्ता ' धन्वंतरे ध्रुव ॥ ६९८ ॥ हृद्या वृष्या च स्वर्येति प्रमेहश्वासकासहा । ज्वरारुचिहरा प्रोक्ता ' केयदेवनिघंटके ' ॥ ६९९ ॥ स्निग्धा शुक्रदा प्रोक्ता ' मदने ' परिकीर्तिता । ४९ मूषकमारी । म० उंदिरमारी । गु० उंदरामारी । मुतश्रेणी द्रवंती च न्यग्रोधी मूषिकाह्वया ॥ ६६० ॥ चित्रा मूषकमारी च प्रत्यक्श्रेणी च चक्षुषा । वृद्धरागविषघ्नीति प्रोक्ता ' राजनिघंटके ' ॥ ६६१ ॥ दशसंख्येति संप्रोक्ता वैद्यविद्याविशारदैः । गुणाः । सुतश्रेणी ' नृपे ' प्रोक्ता वटूरागविषापहा ॥ ६६२ ॥ चक्षुष्या व्रणदोषघ्नी नेत्रामयनिकृन्तनी । ५० विजया । म० भांग । गु० भांग ।

तामलोमशा । प्रोक्ता ' राजनिघंटे ' तु भिषक्शास्त्रविशारदैः ॥ १७९ ॥
'धन्वंतरिनिघंटे' च माचीमला सुलोमशा ।।मदध्या कर्पणी त्वाका।ऽका' फलिका नदीयका ॥ १८० ॥ माचीचलत्सरित्काता तथा मधुरमूषणा। ' कैयदेवे ' भिषक्श्रेष्ठैः नदीकांता तु ' द्रव्यके ' ॥१८१ ॥ तत प्राप्ति बला चैव परा तु सरिका तथा । रजनीति भिषक्श्रेष्ठैः प्रोक्ता 'गणनिघंटके ॥१८२॥ त्रयोविंशतिसंख्याका समोक्ता भिषग्वरैः । गुणाः । काकजंघा तु तिक्तोष्णा कृमिव्रणकफापहा ॥ १८३॥ बाधीर्यजीर्णनाशा च विषम ज्वरहा 'नृपे' । हिमा कषाया संप्रोक्ता कफपित्तविनाशिनी ॥ १८४ ॥ रक्तकुष्ठहरा कडूविषहा, ' कैयदेवके ' । रक्तपित्तं हिमं इति प्रोक्ता 'द्रव्ये'। भिषग्वरैः ॥ १८५ ॥ ५५ चञ्चू । म० चुच । गु० छुंछ । चंचू तु विजला चंचु कलम्बी श्रीरुचित्रिका। चुचुरश्चुचुपत्रश्च सुशाक क्षेत्रसंभव ॥ १८६ ॥ प्रोक्ता ' राजनिघंटे ' तु भिषक्शास्त्रविशारदैः । कटीरश्च कटीरश्च बृहद् घोटी च छोणिका ॥ १८७ ॥ कुटिमर कुथीरश्च तथैव तु चुचुरक । ' कैयदेवे ' भिषक्श्रेष्ठैः कथितो नैव संशय ॥ १८८ ॥ चञ्चुश्ची चञ्चुप शाल्यो विच्छलश्चल एव च । ' द्रव्यरत्नाकरे ' चैव नवमू परिकीर्तिता ॥ १८९ ॥ गुणाः । चञ्चु तु मधुरा तीक्ष्णा कषाया मलशोषिणी । गुल्मोदर-विबधार्शोग्रहणमाशिनी ' नृपे ' ॥ १९० ॥ सर शीता । वन्हिकृत्च वातहा ' द्रव्यनामके ' । दोषत्रयविनाशा च धातुपुष्टिकरा मता ॥ १९१ ॥ मेध्या ' भावप्रकाशे ' च प्रोक्ता वैद्यैर्न संशय । मूत्रकृच्छ्रहरा बातोवात-हेति ' गणे ' स्मृता ॥ १९२ ॥ ५६ बृहच्चञ्चु । म० थोर चुच । गु० मोटी छुंछ ।बृहच्चंचु विशारिश्च महाचंचु सुचुंचुका । स्थूलचुञ्चुर्दीर्घपत्री दिव्यगंधा च ' राजनि ' ॥ १९३ ॥ सप्तसंख्यैर्ने प्रोक्तैषा भिषक्शास्त्रविशारदैः । गुणा । बृहच्चंचु कटूष्णा च कषाया मलशोधिनी ॥ १९४ ॥ गुल्मशूलोदरार्शोघ्नी विषहा च ' रसायनी ' । तद्बीजं तु कटूष्णं च गुल्मशूलविनाश-

दं ॥ ६९५ ॥ त्वग्दोषकंडुकुष्ठघ्नं प्रोक्तं 'राजनिघंटके' । ५७ क्षुद्रचंचु । म० लहान चुंच । गु० नहानी छुछ । क्षुद्रचंचुस्तु चंचुः स्याच्चंचुः शुनकचुंचुका ॥ ६९६ ॥ त्वक्सारभेदिनी क्षुद्रा कटुका पत्रपत्रिका । गुणाः । क्षुद्रचंचुस्तु मधुरा कटूष्णा च कषायिका ॥ ६९७ ॥ दीपनी शूलगुल्मार्शशमनी च विबंधकृत् । प्रोक्ता 'राजनिघंटे' च पुरातनचिकित्सकैः ॥ ६९८ ॥ ५८ सिंदुवार । म० श्वेत निर्गुंडी । गु० धोळी नगोड । सिंदुवारः श्वेतपुष्पः सिंदूकः सिंदुवारकः । स्थिरसाधनकश्चैव त्वनंतः सिद्धकस्तथा ॥ ६९९ ॥ अर्थसिद्धकसंज्ञेति प्रोक्ता 'राजनिघंटके' । श्वेतको नीलपुष्पश्च तद्वत् शीतसहस्तथा ॥ ७०० ॥ निर्गुंडी सितासिंदूका प्रोक्ता 'धन्वंतरौ' ध्रुवं । वनकेंद्रा भूतकेशी भूतावेशया तु सुस्थिरा ॥ ७०१ ॥ 'कैयदेवनिघंटे' तु प्रोक्ता सप्तदशेति च । गुणाः । सिंदुवारा कटुस्तिक्ता कफवातक्षयापहा ॥ ७०२ ॥ कुष्ठकंडूशूलहरा प्रोक्ता 'राजनिघंटके' । कृमिकुष्ठारुचिहरा गुल्मारुचिहरा 'धने' ॥ ॥ ७०३ ॥ चक्षुष्या दीपनी मेध्या केश्यारोचकहारिणी । मेदामशूलव्रणहा प्रतिश्यायहरा तथा ॥ ७०४ ॥ शोफहा श्वासकासघ्नी तत्पुष्पं विषपित्तनुत् । 'कैयदेवनिघंटे' च संप्रोक्ता भिषजां वरैः ॥ ७०५ ॥ स्मृतिमदामवातघ्नी 'द्रव्ये' प्रोक्ता भिषक्जनैः । धूपलेपात्विषघ्नश्च रक्तगुल्महरा तथा ॥ ७०६ ॥ उदावर्तहरा प्रोक्ता 'गणनामनिघंटके' । ५९ नीलसिंदुक । म० निळी निर्गुंडी । गु० नीळी नगोड । शीतंसहा तु निर्गुंडी तथैव नीलसिंदुकः ॥ ७०७ ॥ सिंदू कच्छपिका भूतकेश्यौद्राणी च नीलिका । प्रोक्ता 'राजानिघंटे' तु भिषक्विद्यापरायणैः ॥ ७०८ ॥ गिरिसिंदुकसंज्ञश्च नीलसिंदुः सहा तथा । इंद्राणी 'कैयदेवे' तु संप्रोक्ता भिषजांवरैः ॥ ७०९ ॥ दशसंख्येति प्रोक्तैषा वैद्यविद्याविचक्षणैः । गुणाः । नीलसिंदुः कटुस्तिक्त रूक्षो कासहरस्तथा ॥ ७१० ॥ श्लेष्मशोफानिलहरो मदराध्मानहा 'नृपे' । ६० शेफालिका । म० राननिर्गुंडी । गु० वननगोड । शेफालिका तु सुवहा शुक्लांगी शीतमंजरी ॥ ७११ ॥ अपराजिता [illegible] विजया वातरी भूतकेशि च । प्रोक्ता 'राजनिघंटे' तु

भिषक्शास्त्रविशारदैः ॥७१२॥ वनजा चैव शुक्ला च तथैव नीलमंजरी। तथैव श्वेतसुरसा प्रोक्ता 'धन्वंतरौ' ध्रुवं ॥ ७१३ ॥ वनजामरपत्री त्र शतभीरुः छदा तथा। भूपदी तु सुगंधा च तथैव सुरसा रसा॥७१४॥'कैयदेवनिघंटे' तु संप्रोक्ता भिषजां वरैः। सुवहा तु चला चैव स्मृतिदा 'भावनामके' ॥७१५॥तथेंद्रसुरसा चैव प्रोक्ता'त्वमरकोशके'॥चतुर्विंशतिसंख्याका संप्रोक्ता नैव संशयः ॥ ७१६ ॥ गुणाः । श्वेतानिर्गुंडिका वातकफघ्नी संधिवातहा। गुदवातहरा प्रोक्ता 'राजनामनिघंटके'॥७१७॥ ६१ भेंडा। म० रानभेंडी। गु० मींडा। भेंडा भिंडातिका भिंडो भिंडकः क्षेत्रसंभवः । चतुष्पदः चतुःपुंड्रः सुशाकश्चाम्लपत्रकः ॥ ७१८ ॥ करपर्णा वृत्तबीजो प्रोक्ता 'राजनिघंटके' । गुणाः । भेंडास्त्वम्लरसा सोष्णा ग्राहिका रुचिकारिका ॥७१९॥ 'राजनामनिघंटे' च 'द्रव्ये' वृष्यकरा स्मृता। ६२ पुत्रदा। म० पुत्रदाई । गु० पुत्रदाई । पुत्रदा गर्भदात्री च प्रजादापत्यदा तथा ॥ ॥७२०॥ सृष्टिप्रदा प्राणिमाता तापसद्रुमसन्निभा । सप्तसंख्या च संप्रोक्ता 'राजनामनिघंटके' ॥ ७२१ ॥ गुणाः । पुत्रदा मधुरा शीता नारीपुष्पादिदोषहा । पित्तदाहश्रमहरा गर्भदा 'राजनामके' ॥ ७२२ ॥ ६३ तक्राव्हा। म० ताका। गु० ताका। तक्राव्हा तक्रभक्षा च तक्रपर्याय एव च। पंनागुष्ठी सिताभास्या 'द्राजनाम्नीति पंच च ॥ ७२३ ॥ गुणाः । तक्राव्हस्तु कटुः प्रोक्तो दुष्टव्रणविनाशकः । मेहमदरपित्तघ्नो वैद्यैः 'राजनिघंटके' ॥ ७२४ ॥ ६४ स्वर्णुली। म० सोनोली। गु० सोनुली । स्वर्णुली हेमपुष्पी च स्वर्णपुष्पध्वजा तथा। गुणाः। स्वर्णुली तु कटुः शीता कषाया व्रणहा 'नृपे' ॥ ७२५ ॥ कासश्वासहरा 'द्रव्ये' कफपित्तहरा तथा । ६५ खसखस। म० गु० खसखस। खस्खसः सूक्ष्मबीजः स्यात् सुबीजः सूक्ष्मतंडुलः ॥ ७२६ ॥ प्रोक्तो 'राजनिघंटे' तु भिषक्शास्त्रविशारदैः । खसृतिलो तिलभेदश्च शुभ्रपुष्पो खसखसः ॥ ७२७ ॥ वृष्या बल्येति कविभिः प्रोक्ता 'मदनपालके' । 'भावप्रकाशे' खास्खस रुद्रसंख्या भिषग्वरैः ॥७२८॥ गुणाः। खस्खसी मधुरा प्रोक्ता कांतिकृद्वीर्यदा वरा । प्रोक्ता 'राजनिघंटे' च

वैद्यविद्याविचक्षणैः ॥७२९॥ तृष्णा ग्राही च पित्तघ्नी 'द्रव्ये' च गुरु वात-
कृत्। ६६ सिग्रुडी। म० गु० शेगुडो। सिग्रुडी मतिदा बल्या तथा
पंगुत्वहारिणी ॥ ७३० ॥ वृषत्यति च वातघ्नी गुच्छपुष्पी तु 'राजके'
। गुणाः। सिग्रुडी तु कटूष्णा च वातहृत् ग्रन्थिशूलहा ॥ ७३१ ॥
योग्या रसायने चैव देहदार्ढ्यकरी 'नृपे'। ६७ अरण्यकुसुंभ। म०
रानकर्डई। गु० वनकसुंबो। ततोरण्यकुसुंभा च कौसुंभस्त्वग्निसंभवा ॥
॥ ७३२ ॥ प्रोक्ता 'राजनिघंटे' तु वन्हिसंख्या भिषक्जनैः। गुणाः।
अथारण्यकुसुंभस्तु कटुः पाके च श्लेष्महृत् ॥ ७३३ ॥ दीपनश्चैव संप्रोक्तो
'राजनामनिघंटके। ६८ आहुली। म० तरवड। गु० आवळ। आ-
हुल्यं हलुराख्यं च करं तरवटं तथा ॥ ७३४ ॥ ततः शिबीफला चैव
सुपुष्पारवर्बुरं तथा। दंतकाष्ठं हेमपुष्पं पीतपुष्पं तथैव च ॥ ७३५ ॥
ततः कांचनपुष्पं च नृपमागल्यमेव च। शरपुष्पं च विख्यातं प्रोक्तं 'रा-
जनिघंटके' ॥ ७३६ ॥ वन्हिभूसंख्यका प्रोक्ता भिषक्शास्त्रविशारदैः।
गुणाः। आहुल्यं तु भवेत्तीक्ष्णं चक्षुष्यं शीतमेव च ॥ ७३७ ॥ पित्त-
दाहहरं चैव मुखरुक्कुष्ठकंडुहृत्। जंतुशूलव्रणहरं प्रोक्तं 'राजनिघंटके ॥
॥ ७३८ ॥ ६९ भूम्याहुली। म० भुईतरवड। गु० भोआवळ। ततस्तु
भूम्याहुलिका कुष्ठकेतुस्तथैव च। मार्कंडेयं तु विदितं महौषधमतः परं
॥ ७३९ ॥ प्रोक्तं 'राजनिघंटे' तु भिषक्शास्त्रविशारदैः। मार्कंडी भू-
पैठरिका तथैव मृदुरेचनी ॥ ७४० ॥ 'केयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता
नैव संशय। ततो भूपिंडरी चैव तथैव मधुरेचनी ॥ ७४१ ॥ ग्रह-
संख्या भिषकमिरतु संप्रोक्तैषा विचक्षणैः। गुणाः। भूम्याहुली कटुरित-
क्ता ज्वरकुष्ठप्रसिध्महा ॥७४२॥ प्रोक्तो 'राजनिघंटे' च भिषक्शास्त्र-
विशारदैः। सरा कषाया शोफघ्नी कफपित्तविनाशिनी ॥७४३॥ आनाहो-
दरगुल्मघ्नी कटुः तृष्णाविषापहा। छर्दिकुष्ठकृमिघ्नी च श्वासदाहज्वरापहा
॥७४४॥ 'केयदेवनिघंटे' च वैद्यैः प्रोक्ता न संशय। ७० कासमर्द।
म० कासवदा। गु० कासुंदरो। कासमर्दस्तु कासारिस्त्वरिमर्दश्चदीपनः
॥ ७४५ ॥ कनक जरणश्चैव कालश्च कालमर्दकः। 'धन्वतरिनिघंटे' तु

सम्प्रोक्तो भिषजांवरैः ॥ ७४६ ॥ कनक' कासक्श्चैव कर्तश्वासघ्न एव च।
कासमर्दि' कर्कशश्च ' कैयदेवे ' प्रकीर्तित ॥७४७॥ मर्दकः कटवटश्च
' द्रव्यारत्नाकरे ' स्मृत । अजनो नातरश्चैव प्रोक्ता ' मदनपाल्के ।
॥ ७४८ ॥ कोल ' गणनिघंटे ' च प्रोक्त वैद्यै विचक्षणैः । त्रयोविंशति-
संख्याका प्रोक्ता सर्वे भिषग्वरैः ॥ ७४९ ॥ गुणाः । कासमर्दस्तु ति
क्तोष्णो मधुरः कफवातहा । अजीर्णकासपित्तघ्न पाचन कठशोधन ॥
॥७५०॥ ' राजनामनिघंटे ' च ' धन्वे ' पित्तकरः स्मृतः । विषकासहर
प्रोक्त ' कैयदेवनिघटके ' ॥ ७५१ ॥ सर शीतो विषूचिघ्न ' द्रव्ये '
च कफवातहृत् । तत्पत्र तु भवेदुष्ण वृष्य वातघ्नपाचन ॥ ७५२ ॥
' मदने ' कविभिः प्रोक्त ' भावे ' पित्तविनाशिन । ७१ । आदित्यपत्र।
म० गु० आदित्यपत्र । सुपत्रो विटपश्चार्क कुष्ठारिस्तपन उद ॥
॥ ७५३ ॥ रविप्रियो रश्मिपति सूर्यपत्रोकपत्रक। । आदित्यपत्रोर्कदलो
प्रोक्तो ' राजनिघटके ' ॥ ७५४ ॥ रुद्रसंख्या भिषक्श्रेष्ठै सप्रोक्तो
नैव सशय । गुणाः । आदित्यपत्र कटुरुष्णवीर्यं वातघ्नमेतत्कफनाशन
च ॥ ७५५ ॥ स्याद्दीपन गुल्महर तथैवारुच्यघ्नमुक्त ' नृपनामके ' च ॥
७२ श्वेताम्ली । म० श्वेत पिठोंडी । गु० श्वेत पिठोंडी— पर्पोटी ।
श्वेताम्ली त्वम्लिका चैव पिठोंडी पिष्टिका तथा ॥ ७५६ ॥ श्वेताम्ल
पीडिका चैव प्रोक्ता ' राजनिघटके ' । रसमग्येति सप्रोक्ता भिषक्शा-
स्त्रविशारदै ॥ ७५७ ॥ गुणाः । श्वेताम्ली मधुरा वृष्या पित्तघ्नी बल
दायका । ७३ नीलाम्ली । म० काळी पिठोंडी, निळुंबी । गु० का-
ळी पिटोंडी, काळी पर्पोटी । नीलाम्ली चैव नीली च पिष्टाही दीर्घशा-
खिका ॥ ७५८ ॥ श्यामाम्ला ' राजनाम्नीति ' प्रोक्ता वैद्यविचक्षणैः ।
' द्रव्यरत्नाकरे ' चैव नालाम्ला परिकीर्तिता ॥ ७५९ ॥ गुणाः । नी-
लाम्ला मधुरा रुच्या कफवातज्वरापहा । ७४ अजगंधा । म० तिळवण ।
गु० तळवणी । अजगंधा वस्तगंधा खरपुष्पाऽविगन्धिका॥७६०॥ उग्रगंधा
ब्रह्मगर्भा ब्राह्मी पूतिमयूरिका । प्रोक्ता ' राजनिघंटे ' तु भिषग्विद्याविच-
क्षणै ॥ ७६१ ॥ पशुगधा च रजनी नंदभ च सुवर्चला । ततम्न दाब

रीगंधा प्रोक्ता ' गणनिघंटके ' ॥ ७६२ ॥ तुंगी तु काबरी चैव प्रोक्ता ' धन्वंतरौ ' ध्रुवं । पूतिकोटा वर्बरी च पूतिवर्बर एव च ॥ ७६३ ॥ तुंगी तुवरपुष्पीति प्रोक्ता ' मदनपालके ' । शतपुष्पा पूतिगंधा तथैव तु शाकंभरा ॥ ७६४ ॥ वर्बरो वर्बरीगंधा ' केयदेवे ' प्रकीर्तिता । चतुर्विंशतिसंख्याका संप्रोक्ता भिषजा वरैः ॥७६५ ॥ गुणाः । अजगंधा कटूष्णा च वातगुल्महरा तथा । कर्णव्रणशूलहन्त्री वातोदरविनाशिनी ॥ ॥७६६॥ पीताजगंधा च ' नृपे ' ह्युक्ते हितकारिणी । ह्यग्निवर्द्धिनी चैव दृष्टिमाद्यप्रदायका ॥ ७६७ ॥ शुक्रवृद्धिकरा वातकफहा ' मदने ' स्मृतः ।७८ आदित्यभक्ता । म० सूर्यफूल । गु० सूरजमुखी । आदित्यभक्ता वरदात्यर्कभक्ता सुवर्चला ॥ ७६८ ॥ अर्ककांता सूर्यलता सौरी मडूकपर्णिका । सुतेजाऽर्कहिता चैव रवीष्टा सुरसभवा ॥७६९॥ मंडूकी सत्यनामा च देवी मार्तंडवल्लभा । विक्रांता भास्करेष्टेति प्रोक्ता ' राजनिघंटके ' ॥ ७७० ॥ सूर्यकांतादित्यभक्ता तथैव च च सुखोद्भवा । आदित्यपर्णी सप्रोक्ता ' धन्वंतरिनिघंटके ॥ ७७१ ॥ दिव्यतेजा शीतवृक्षो रविवल्ली रवौषधी । अर्कपुष्पी मूलपर्णी वृद्धिका तु रविप्रिया ॥ ७७२ ॥ ' केयदेवे ' तु सप्रोक्ता भार्या ब्रह्मसुवर्चला । रविक्रांता मडुकी च तथैव च महौषधी ॥ ७७३ ॥ द्रव्यरत्नाकरे ' चैव संप्रोक्ता भिषजां वरैः । सूर्यावर्ता रविप्रीता प्रोक्ता ' मदनपालके ' ॥ ७७४ ॥ सुकर्कला सूर्यभक्ता तथा चादित्यवल्लभा । कपोतवंका विख्याता प्रोक्ता ' गणनिघंटके ' ॥ ७७५ ॥ गुणाः । आदित्यभक्ता शिशिरा कटुस्तिक्ता भयापहा । स्वद्दोषकंडुकुष्ठघ्नी भूतव्रणविनाशिनी ॥ ७७६ ॥ शीतज्वरहरा प्रोक्ता ' राजनामनिघंटके' । शोफोष्णपाडुकुष्ठघ्नी चलासघ्नी ' गणे ' स्मृता ॥ ७७७ ॥ मूत्रला तु ' मदे ' प्रोक्ता पुरातनचिकित्सकैः । स्वर्या स्फोटहरा प्रोक्ता हिता चैव रसायनी ॥७७८॥ ' धन्वंतरिनिघंटे ' च सप्रोक्ता वैद्यनायकैः । पाके स्वादु रसे गुर्वी विष्टंभी पित्तला तथा ॥ ॥७७९॥ कफवातहरा रूक्षा ' द्रव्यनामनिघंटके ' । अत्युष्णा लघु रूक्षा च सरा कफहरा तथा ॥ ७८० ॥ रक्तपित्तारुचिहरा श्वासकासज्वरापहा

विस्फोटकुष्ठमेहघ्नी चाश्मरीयोनिरोगजित् ॥ ७८१ ॥ कृच्छ्रपाडुहरा प्रोक्ता ' केयदेवे ' भिषग्वरैः । कफवातमजतुघ्नी प्रोक्ता 'भावप्रकाशके' ॥ ७८२ ॥ ७६ विषमुष्टिः । म० मुईदोडी, विषदोडी । गु० कडवी खरखोडी । विषमुष्टि केशमुष्टि सुमुष्टिरणमुष्टिक । क्षुपडोडीति सम्प्रोक्ता भिषग्भि 'राजनामके' ॥ ७८३ ॥ क्षुद्रमुडी ' केयदेवे ' डोडी ' मदन पालके '। क्षुधाव्हा चैव सम्प्रोक्ता ' केयदेवे ' पुनस्तथा ॥ ७८४ ॥ अष्टसख्या भिषकश्रेष्ठै सम्प्रोक्ता नैव सशय । गुणा । विषमुष्टि कटु स्तीक्ष्णा दीपनी कफव तहा ॥ ७८५ ॥ कठामयहरा रुच्या रक्तपित्तहरा तथा । दाहहा भिषजा नाम्ना प्रोक्ता ' राजनिघटके '॥ ७८६ ॥ मेहकि मिश्वासगुल्मान् मूषकाया विष तथा । अशांन् हताति कविभि प्रोक्ता ' कैयनिघटके ' ॥ ७८७ ॥ ७७ डोडी । म० केर्णदोडी । गावरात खोखरदोडी । गु० वरसाददोडी । अन्याडोडी तु जीवती शाकश्रेष्ठा सु खाव्हा । बल्पर्णी दीर्घपत्रा सक्ष्मपत्रा च जीवनी ॥ ७८८ ॥ प्रोक्ता

निका ' गणे ' । वामनी वाससी चैव विपघ्नी च महौजसी ॥ ७९७ ॥
पटतूलश्च संप्रोक्ता वैद्यविद्याविचक्षणैः । गुणाः । कार्पासी मधुरा शीता
स्तन्या पित्तकफापहा ॥ ७९८ ॥ तृष्णादाहश्रमहरा भ्रांतिमूर्च्छाविना-
शिनी । बलदेति भिषकश्रेष्ठैः प्रोक्ता ' राजनिघंटके ' ॥ ७९९ ॥ त-
द्वीजं श्लेमलं स्निग्धं वृष्यं ' कैयनिघंटके ' । तत्पत्रं वातहृद्रक्तनाशनं मू-
त्रवर्द्धनं ॥ ८०० ॥ कर्णपीडाकर्णनादपूयस्रावविनाशनं । ' भावप्रकाशे '
संप्रोक्तं वैद्यविद्याविचक्षणैः ॥ ८०१ ॥ ८० अरण्यकार्पासी । म०
रानकापसी । गु० वनकपास । वनजारण्यकार्पासी भारद्वाजी वनोद्भवा ।
गुणाः । भारद्वाजी हिमा रुच्या ' नृपे ' शस्त्रव्रणापहा ॥ ८०२ ॥
८१ कोकिलाक्षः । म० तालिमखाना, कोलिस्ता । गु० एखरो ।
कोकिलाक्षः, शृंगाली च शृंखला रणकस्तथा । शृगालघंटी वज्रास्थि-
शृंखला व्रजकंटकः ॥ ८०३ ॥ इक्षुरः क्षुरको वज्रः शृंखलीका पिके-
क्षणः । पिच्छिला चेक्षुगंधा च ' राजनामनिघंटके ' ॥ ८०४ ॥ इक्षुरी
चेक्षुवाला च इक्षुरस्तैलकंटकः । तथेक्षुगंधिका चैव बृहत्कोशा च खगदः
॥ ८०५ ॥ कलंब्रशाली विज्ञेया ' कैयदेवे ' प्रकीर्तिता । कोकिलश्च
तथा ' द्रव्ये ' प्रोक्तं वैद्यविशारदैः ॥ ८०६ ॥ तथा ' मदनपाले '
तु कांडेक्षुश्च क्षुरस्तथा । काकेक्षुर्भिक्षुकश्चैव बालिका इक्षुकस्तथा ॥
८०७ ॥ प्रोक्ता ' भावप्रकाशे ' च वैद्यविद्याविशारदैः । गुणाः । को-
किलाक्षस्तु मधुरः शीतपित्तातिसारजित् ॥ ८०८ ॥ वृष्यः कफहरो ब-
ल्यो रुच्यः संतर्पणो ' नृपे ' । स्निग्धः पिच्छलवृष्यश्च वाततृष्णाश्मरीहरः
॥ ८०९ ॥ रक्तामवातहृत् प्रोक्तो ' कैयदेवनिघंटके ' । मेहवातहरो
' द्रव्ये ' ' भावे ' शोथविनाशनः ॥ ८१० ॥ वातरक्तहरः प्रोक्तो पु-
रातनचिकित्सकैः । ८२ सातला । म० थोर सोनुळी, पीतदुग्ध, सेहुंड भेद।
गु० साथेर । सातला सप्तला सारी विदुला विमलाऽमला ॥ ८११ ॥
बहुफेना चर्मकषा फेनदीप्ता विषाणिका । स्वर्णपुष्पी पत्रघना प्रोक्ता ' राज-
निघंटके ' ॥ ८१२ ॥ विदला चर्मकर्षा च फेना दीप्ता मरालिका । सनालिका
पीतदुग्धा तथैव तु सरालिका ॥ ८१३ ॥ ' कैयदेवनिघंटे ' तु प्रोक्ता

वैद्यविचक्षणैः । तथा ' मदनपाले ' तु सम्यक्प्रोक्ता वनालिका ॥८१४॥ विडुला भूमिफेना च प्रोक्ता 'भावप्रकाशके' । आत्मनाला चर्मकोशा त्वमला ' गणनामके' ॥ ८१५ ॥ एकत्रिंशत्संख्यकेति प्रोक्ता शास्त्रविचक्षणैः । गुणाः । सातला कटु पित्तघ्नी लघु तिक्ता कषायका ॥८१६॥ विसर्पविषहंत्री च मेघाविस्फोटहारिणी । व्रणशोफहरा प्रोक्ता वैद्यै ' राजनिघंटके ' ॥ ८१७ ॥ मूत्रकृच्छ्रहरा प्रोक्ता भिषग्भि ' र्गणनामके ' । शोधना कफपित्तासृक्शोफोदरविनाशिनी ॥ ८१८ ॥ लघु मारुतकृत्प्रोक्ता ' धन्वे'नाहहरस्तथा । शीतला चैव तीक्ष्णा च तिक्ता चैव हृत्प्रिया ॥ ८१९ ॥ हृद्रोगकफहृच्चैव पित्तोदावर्तगुल्महा । उदरघ्नी गरहरा विषक्रिमिविनाशिनी ॥ ८२० ॥ शोथामारुचिहा 'कैये' प्रोक्ता रेचकवांतिकृत् । ८३ कामवृद्धिः । म० गु० कामवृक्ष । स्मरवृद्धिः कामवृद्धिस्तथैव मदनायुधः ॥ ८२१ ॥ कंदर्पजीवो कामोपजीवो चैव जितेंद्रियः । मनोजवृद्धिः संप्रोक्तो ' राजनामनिघंटके ' ॥ ८२२ ॥ गुणाः । कामवृद्धस्य बीज स्यान्मधुरं बलवर्द्धनं । कामवृद्धिकरं रुच्यं बहुलेंद्रियवृद्धिदं ॥ ८२३ ॥ ८४ चक्रमर्दः । म० तरोटा, टाकळा । गु० कुवाडियो । एडहस्ती विमर्दश्च दद्रुघ्नः शकुनाशनः । चक्री चक्रगजश्चैव दद्रुघ्नो प्रपुन्नटः ॥ ८२४ ॥ चक्रमर्दस्त्वेडगजो मेषाव्हो चेडहस्तिकः । दशावर्तकश्चक्रगजश्चक्री पुन्नाट एव च ॥ ८२५ ॥ खर्जूमस्तु गजाख्यश्च प्रोक्तं ' गणनिघंटके '। ततस्त्वेडगजश्चैव मेषा श्वेडगजस्तथा ॥८२६॥ प्रपुन्नटश्च विख्यातो प्रोक्तो ' धन्वंतरी ' ध्रुवं । श्वेटकोडगजश्चैव दोढको मर्दको मदा ॥ ८२७ ॥ चक्रिको मेषकुसुमो ' कैयदेवनिघंटके ' । तथा 'मदनपाले' तु संप्रोक्तो कुष्ठकृंतनः ॥८२८॥ 'भावप्रकाशे' संप्रोक्तो पद्माटो मेषलोचनः । उरणाख्यस्तु ' कोशे ' च कविभिः परिकीर्तितः ॥ ८२९ ॥ गुणाः । चक्रमर्दः कटुः प्रोक्तो मेदोवातकफापहः । व्रणकंडूकुष्ठदद्रुपामाहा ' गणनामके ' ॥ ८३० ॥ हिमो रूक्षोष्ण लघुश्च स्वादुर्विष्टंभकारकः । मलमूत्रहरश्चैव पित्तानिलहरस्तथा ॥ ८३१ ॥ कफकुष्ठगरघ्नश्च श्वासरामादिभेदहा । अशाविकिमिहंतेनि फलं तस्य कटूष्णकं ॥ ८३२ ॥

विपापहं तस्य शाकं मल्घं ' केयदेवके '। त्रिदोषघ्नं तथा ग्राहि शिरोर्तिहरण तथा ॥ ८३३ ॥ शोकोद्भवकफार्त् हन्ति ' द्रव्यरत्नाकरे ' स्मृतं। ८५ झिंझिरीटा। म० झिंझरूट। गु० झिमटे। झिंझिरीटा कंटफली पीतपुष्पा च झिंझिरा ॥८३४॥ ह्रस्वरोमाश्रयफला वृत्ता ' राजनिघंटके '। ' द्रव्यरत्नाकरे ' चैव झिंझीसा परिकीर्तिता ॥ ८३५ ॥ सप्तसल्येति संप्रोक्ता भिषक्शास्त्रपरायणैः। गुणाः। झिंझिरीटा कटुः शीता कषाया चातिसारजित् ॥ ८३७ ॥ वृष्या सतर्पणी वल्या माहिषीक्षीरवर्धिनी। प्रोक्ता ' राजनिघंटके ' च वैद्यविद्याविशारदैः ॥ ८३७ ॥

## ३. पर्पटादि वर्ग.

१ पर्पटः। म० पित्तपापडा। गु० खडसलियो, पीतपापडो। पर्पटश्चरको रेणुस्तृष्णारिः सरको रजः। शीतः शीतप्रिय. पांशुः कल्याणो वर्मकंटकः ॥ ८३८ ॥ कृशशाखः पर्पटकः पित्तारि रक्तपुष्पकः। सुतिक्तो कटुपत्रश्च कवचो ' राजनामके ' ॥ ८३९ ॥ वरतिक्तो वर्मकटो वरकस्त्वतिसारहा। ज्वरनाशनकश्चैव प्रोक्तो ' धन्वंतरौ ' ध्रुवं ॥ ८४० ॥ ' केयदेवनिघंटे ' तु पित्तहा शिववल्लभ। चर्माह्व्य. सूक्ष्मपत्रो चर्मकंटक एव च ॥ ८४१ ॥ यवकटस्तथा ' द्रव्ये ' सृष्टिकः फलकंटकः। तथा 'गणनिघंटे' तु सस्मृतो वर्मखेटकः ॥८४२॥ गुणाः। पर्पटः शीतलस्तिक्तः पित्तश्लेष्मज्वरापहः। रक्तदाहारुचिग्लानिमदभ्रमहरो ' नृपे ' ॥ ८४३ ॥ मुखरोगहरो प्रोक्तो वैद्यै'र्गणनिघंटके'। रसे पाके च तिक्तः स्यात् संग्राही वातलस्तथा ॥ ८४४ ॥ दाहच्छर्दिपिपासघ्नः ' केये ' च पित्तनाशनः। ' द्रव्यरत्नाकरे ' प्रोक्तः पित्तमोहविनाशकृत् ॥ ८४५ ॥ २ जीवक। म० गु० जीवक। जीवको जीवनो जीव्यः शृंगाह्वः प्राणदः प्रिय। मंगल्यश्चिरजीवी च मधुर. कूर्मशीर्षक ॥ ८४६ ॥ ह्रस्वाङ्गो वृद्धिदोऽयुष्मान् दीर्घायुर्जीवदस्तथा। वलदस्तु तथा प्रोक्तो ' राजनामनिघंटके ' ॥ ८४७ ॥ धन्वंतरिनिघंटे ' तु शृंगकः कूर्चशीर्षक। क्ष्वेडः स्वादुः 'क्षीरजीवी' भिषग्भिः परिकीर्तितः ॥८४८॥ ' केयदेवनिघंटे ' तु

शर्मरूपैक एव च। श्रेयस्तु जीववृक्षश्च सप्रोक्तो भिषजां वरे ॥८८९॥ गुणाः । जीवको मधुरः शीतो रक्तपित्तानिलापह । क्षयदाहहरश्चैव स्वरशुक्रविवर्द्धनः ॥ ८९० ॥ श्लेष्मवृद्धिकरश्चैव गर्भसंधानकारकः । प्रोक्त 'राजनिघण्टे' च वैद्यैर्विद्याविचक्षणैः ॥ ८९१ ॥ ३ ऋषभक । म० गु० ऋषभक । ऋषभो गोपतिर्धीरो विषाणी धूर्धरो वृषः । ककुद्मान् पुंगवो वोढा शृंगी धूर्यस्तु भूपति ॥ ८९२ ॥ कामी ऋक्षप्रियश्चोक्तो लांगुली गोश्च बन्धुर । गोरक्षो वनवासीति प्रोक्तो 'राजनिघण्टके' ॥ ८९३ ॥ 'धन्वन्तरिनिघण्टे' तु दुर्धरो वृषभस्तथा । श्रीमान् वृषाणी ककुदो विद्राक्षो मातृक स्मृतः ॥ ८९४ ॥ 'कैयदेवनिघण्टे' तु भिषग्भि परिकीर्तित । बद्धामयपतिश्चैव 'द्रव्यरत्नाकरे' स्मृत ॥ ८९५ ॥ गुणाः । ऋषभो मधुरः शीत पित्तरक्तविरेचनुत् । शुक्रश्लेष्मकरश्चैव दाहक्षयज्वरापह ॥ ८९६ ॥ गर्भसंधानकारीति प्रोक्तो 'राजनिघण्टके' । ४ श्रावणी । म० धाकटी मुंडी । गु० नहानी मुंडी, ( बोडियो कलार ) । श्रावणी स्यान्मुण्डितिका भिक्षु श्रवणशीर्षकः ॥ ८९७ ॥ श्रवणा च प्रव्रजिता परिव्राजी तपोधन । प्रोक्ता 'राजनिघण्टे' तु भिषग्विद्याविचक्षणै ॥ ८९८ ॥ मुण्डिनीका श्रवण्याव्हा प्रोक्ता 'धन्वे' भिषग्वरै. । अलम्बुषा श्रवणशुक्ला कुम्भूका च श्रीमती ॥ ८९९ ॥ पुनश्च 'कैयदेवे' च 'द्रव्ये' प्रोक्ता तपोधना । क्षीरतिक्ता नवोरा च नीलहारा 'गणे' स्मृता ॥९००॥ गुणाः । श्रावणी तु कषाया स्यात् कटूष्णा कफपित्तजित् । आमातिसारकासघ्नी विषच्छर्दिहरा 'नृपे' ॥ ९०१ ॥ वातपित्तास्रहन्त्री च तथारुचिहारिणी । गण्डापस्मारहन्त्री च श्लीपदघ्नी 'धने' स्मृता ॥ ॥९०२॥ वीर्योष्णा चैव मेध्या च तथा वातकफापहा । अपचीश्लीपदमेहघ्नी पाण्डुयोनिरुजापहा ॥ ९०३ ॥ कृच्छ्रघ्ना च निर्दिष्टा प्रोक्ता 'कैयदेवनिघण्टे' । पाके कटुर्गुदार्तिघ्नी प्रोक्ता 'भावप्रकाशे' ॥ ९०४ ॥ ५ महाश्रावणी । म० मोठी मुंडी । गु० मोटी मुंडी—कगार । महाश्रावणिका चैव महामुण्डी च गोरखनी । कदम्बपुष्पा विरचा कोल्पा वोढा पटकपा ॥ ९०५ ॥ नदीकदम्बो मुण्डाख्या महामुण्डितिका तथा । ऊर्ध्वा ग्रन्थिनिका

माता स्थविरा लोमिनी तथा॥८६८॥मूकदंष्ट्राऽलंबुजा च प्रोक्ता 'राजनिघंटके' । 'धन्वंतरौ' लोमनीया छिन्नग्रंथिनिका स्मृता ॥८६९॥ 'कैयदेवनिघंटे' तु गोच्छाला त्वरुणा तथा । तपोधना वोटवृक्षा वोडा प्रोक्ता भिषग्वरैः ॥ ८७० ॥ 'द्रव्यरत्नाकरे' चैव शोभनीया प्रकीर्तिता । 'भावप्रकाशे' संप्रोक्ता स्वव्यथाऽतितपस्विनी ॥ ८७१ ॥ कोलाहला स्वंबुसा च शशाका 'गणनामके' । गुणाः । महाश्रावणिका चोष्णा ईषद्रोल्या मरुच्छ्वा ॥ ८७२ ॥ स्वरकृद्रोचनी तिक्ता मेहहच्च रसायनी । 'राजनामनिघंटे' च प्रोक्ता वैद्यविशारदैः ॥ ८७३ ॥ ६ मेदा । म० गु० मेदा । मेदा वसा मणिच्छिद्रा जीवनी शल्यपर्णिका । मेदसारा स्नेहवती मेदिनी मधुरा वरा ॥ ८७४ ॥ स्निग्धा मेदोद्भवा साध्वी विपदा बहुरंध्रिका । नखच्छेद्या तथा प्रोक्ता 'राजनामनिघंटके' ॥ ८७५ ॥ शल्यदा शल्यपर्णी च नथा पुरुषहंतिका । 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ८७६ ॥ तथा 'मदनपाले' तु मणिक्षुद्रा भवाध्वरा । सुरा मेदसमुद्भूता धरणी मेहसंभवा ॥ ८७७ ॥ प्रोक्ता 'गणनिघंटे' तु भिषक्शास्त्रपरायणैः । गुणाः । मेदा तु मधुरा शीता पित्तदाहार्तिकासनुत् ॥ ८७८ ॥ राजयक्ष्मज्वरहरा वातदोषकरी 'नृपे' । गुरु स्तन्या वातपित्तनाशिनी 'धन्वनामके' ॥ ८७९ ॥ बलासशुक्रकृच्चैव बृंहणं 'कैयदेवके' । वातापित्तास्रहच्चैव क्षतक्षयहरा तथा ॥ ८८० ॥ रक्तवातहरा चैव प्रोक्ता 'भावप्रकाशके' । ७ महामेदा । म० गु० महामेदा । महामेदा वसुच्छिद्रा जीवनी पांशुरागिणी ॥ ८८१ ॥ देवेष्टा सुरमेदा च दिव्या देवमणिस्तथा । श्रेष्ठवगधा महाच्छिद्रा वृक्षार्हा 'राजनामके' ॥ ८८२ ॥ मणिछिद्रा वृक्षरहा महापुरुषदंतिका । 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ८८३ ॥ तथा 'मदनपाले' तु त्रिदंती देवतामणि. । प्रोक्ता षोडशसंख्येति भिषक्शास्त्रविशारदै. ॥८८४॥ गुणाः। महामेदा हिमा रुच्या कफशुक्रविवर्द्धिनी । रक्तदाहहरा चैव पित्तक्षयनिवारिणी ॥८८५॥ वातज्वरहरा चैव प्रोक्ता 'राजनिघटके' । ८ ऋद्धिः । म. गु. ऋद्धि । ऋद्धिः सिद्धिः प्राणदा च जीवदात्री तु श्रेयसी ॥ ८८६ ॥ अपागी चेतनी योग्या

रथांगी मंगला तथा । कोल्कांता यशस्या च जीवश्रेष्ठेति 'राजके' ॥ ८८७ ॥ रथांगं मंगलं चैव वसुर्वेन्वतरौ स्मृतं । आश्वासनी तुष्टिराशी चेतना च पयस्विनी ॥ ८८८ ॥ ९ वृद्धिः । म. गु. वृद्धि । वृद्धि स्तुष्टिः पुष्टिदा श्री मंगल्या वृद्धिदात्रिका । जनेष्टा संपदा लक्ष्मीर्भूतिरुत्सव एव च ॥ ८८९ ॥ जीवभद्रा भिषक्श्रेष्ठैः प्रोक्ता 'राजनिघंटके' । ऋषिश्रेष्ठा युगंयोग्या लक्ष्मीः सर्वजनप्रिया ॥ ८९० ॥ 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजा वरैः । सुखा तु शोषिनी चैव श्रावणी च सुयोग्यदा ॥ ॥ ८९१ ॥ विभूतिर्मधुरा चैव प्रियो मंगल एव च । 'कैयदेवनिघंटे' तु सप्तविंशतिसंख्यका ॥ ८९२ ॥ गुणाः । ऋद्धिर्वृद्धिश्च मधुरा सुस्निग्धा तिक्तशीतला । रुचिमेधाकरी श्लेष्मकुष्ठक्रिमिहरा 'नृपे' ॥ ८९३ ॥ क्षयपित्तानिलहरा रक्तज्वरविनाशिनी । कफशुक्रप्रदा चैव प्रोक्ता 'धन्वंतरौ' ध्रुवं ॥ ८९४ ॥ त्रिदोषमूर्छाहंत्री च रक्तपित्तहरा तथा । गर्भवृद्धिप्रदा चैव प्रोक्ता 'कैयनिघंटके' ॥ ८९५ ॥ ऋद्धि- र्दोनादिनिघा च प्रोक्ता 'गणनिघंटके' । १० धूम्रपत्रा । म० गंधाणी । गु० कीडामारी । धूम्रपत्रा तु धूम्राव्हा सुलभा च स्वयंभुवा ॥ ८९६ ॥ गृध्रपत्रा च गृध्राणी क्रिमिघ्नी श्लीपदापहा । अष्टसंख्या 'नृपे' प्रोक्ता भिषग्भिः शास्त्रवित्तमैः ॥८९७॥ गुणाः । गृध्राणी तु रसे तिक्ता शोफ- क्रिमिविनाशिनी । उष्णा कासहरा रुच्या दीपनी 'राजनामके' ॥८९८॥ ११ प्रसारिणी । म० चादवेल । गु० नारी । प्रसारिणी सुप्रसरा सारणी सरणी सरा । चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥ ८९९ ॥ प्रबला राजपर्णी च बल्या भद्रबला तथा । चंद्रवल्ली प्रभद्रा च 'राजनामनिघंटके' ॥ ९०० ॥ महिता भद्रवल्ली च 'कैये' प्रतानिका तथा । तथा 'मदनपाले' तु प्रसरा परिकीर्तिता ॥ ९०१ ॥ प्रोक्ता 'भावप्रकाशे' तु प्रतानिनी कटम्भरा । गुणाः । प्रसारिणी गुरूष्णा च तिक्ता वातार्शहा तथा ॥ ९०२ ॥ श्वयथुमलहारा च विष्टंभहारिणी 'नृपे' । वर्णहंत्रीति संप्रोक्ता 'मदने' वैद्यनायकैः ॥ ९०३ ॥ सरा सधानकृचैव त्रिदोषघ्नी च वृष्यदा । वातेन शानिकरा प्रोक्ता 'धन्वनिघंटके' ॥ ९०४ ॥ रसे

तिक्ता च वीर्योष्णा शुक्रला वातरक्तहाः। त्रिदोषघ्नो 'केयदेवे' प्रोक्ता वैद्यैर्न संशयः ॥ ९०५ ॥ १२ पाषाणभेदी। म० पाषाणभेदी। गु० पाषाणभेदी। पाषाणभेदोऽश्मघ्नश्च शिलाभेदोऽश्मभेदकः। श्वेता चोत्पलभेदी च नगभिच्छिलागर्भकः ॥ ९०६ ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यशास्त्रपरायणैः। पाषाणभेदो पाषाणस्तथैवाश्मनिभेदकः ॥ ९०७ ॥ अश्मभेदनसंज्ञश्च नगभेदन एव च। प्रोक्ता 'मदनपाले' तु भिषक्‌विद्याविचक्षणैः ॥ ९०८ ॥ तथा 'भावप्रकाशे' तु गिरिभित् परिकीर्तितः। दृषद्भेदः प्रस्तरश्च नगभेदक एव च ॥ ९०९ ॥ अश्मरीभेदकश्चैव प्रोक्तो 'केयनिघंटके'। गुणाः। पाषाणभेदो मधुरस्तिक्तो मेहकृपाहरः ॥ ९१० ॥ प्रोक्तं 'राजनिघंटे' तु वैद्यविद्याविशारदैः। 'केयदेवे' हिमो भेदी योनिरोगविनाशनः ॥ ९११ ॥ मूत्ररोगहरश्चैव व्रणदोषहरस्तथा। गुदभ्रंशहरश्चैव 'गणे' प्रोक्ता भिषक्‌जनैः ॥ ९१२ ॥ शूलकृच्छ्रत्रिदोषघ्नो मेहहृद्रोगप्लीहहा। गुल्मार्शनाशनश्चैव बस्तिशुद्धिकरस्तथा ॥ ९१३ ॥ शर्कराशिश्नशूलघ्नः प्रोक्तो 'धन्वंतरी' ध्रुवं। शोफहृद्रोगहा 'भावे' 'मदने' तु सरः स्मृतः ॥ ९१४ ॥ १३ वटपत्री पाषाणभेदी। म० गु० वडवती पाषाणभेदी। अन्या तु वटपत्रीस्यात्तथा ऐरावती च सा। गोधावती रावती च श्यामा खड्गनामिका ॥ ९१५ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्‌शास्त्रपरायणैः। सुस्त्रातिका रेवती च मोहिनी 'केयदेवके' ॥९१६॥ गुणाः। वटपत्री हिमा गौल्या मेहकृच्छ्रविनाशिनी। बलदा अश्महंत्री च दीपनी 'राजनामके' ॥ ९१७ ॥ योनिदोषहरा चैव मूत्ररोगहरा तथा। तत्फलं मधुरं रूक्षं स्तंभनं लेखनं ध्रुवं ॥ ९१८ ॥ कफपित्तहरं चैव विदंष्ट्राध्मानकृत्तथा। क्षुद्रं ग्राही पित्तजिच्च प्रोक्तं 'केयनिघंटके' ॥ ९१९ ॥ स्तंभनं वातलं शीतं मदने परिकीर्तितं। १३। श्वेतशिला। म० पांढरा दगडी पाषाणभेद। गु० धोळो पाषाणभेद। श्वेताशिला वल्कला च शिलाजा शैलवल्कला ॥ ९२० ॥ वल्का तु शैलगर्भाव्हा शिलात्वक् 'राजनामके'। गुणाः। शिलावल्कं हिमं स्वादु मेहकृच्छ्रविनाशनं ॥

॥ ९२१ ॥ मूत्ररोगाश्मरीगुल्मक्षयपित्तापहारक । १४ क्षुद्रपाषाणभेदा । मु० गु० क्षुद्रपाषाणभेद । क्षुद्रपाषाणभेदाख्या चतुःपत्री च पार्वती॥ ॥ ९२२ ॥ नगभूश्चाश्मकेतुश्च गिरिभूः कंदरोद्भवा । शैलोद्भवा च गिरिजा नगजा 'राजनामके' ॥ ९२३ ॥ दशसंख्येति संप्रोक्ता भिषक्शास्त्र परायणैः । गुणाः । मणघ्नी तु 'नृपे' प्रोक्ता मूत्रकृच्छ्राश्मरीहरा ॥ ॥ ९२४ ॥ १० गृहकन्या । म० कोरफड, कोरकड । गु० कुंवार । गृहकन्या कुमारी च कन्यका दीर्घपत्रिका । स्थलेरुहा मृदु कन्या बहुपत्रामराऽजरा ॥ ९२५ ॥ कटकमावृता वीरा भृंगेष्टा विपुलश्रवा । ब्रह्मघ्नी तरुणी रामा कपिला चाबुधिश्रवा ॥ ९२६ ॥ सुकंटका स्थूलदला प्रोक्ता 'राजनिघंटके' । माता च मंडला चैव फलमरसशाऽक्षकारका ॥ ॥ ९२७ ॥ 'कैयदेवनिघंटे' तु भिषक्श्रेष्ठैः प्रकीर्तिता । 'द्रव्यरत्नाकरे' चैव संप्रोक्ता ग्वतिपित्तला ॥ ९२८ ॥ तथा घृतकुमारी तु प्रोक्ता 'भावप्रकाशके' । सप्तविंशतिसंख्याका संप्रोक्ता भिषजांवरैः ॥ ९२९ ॥ गृहकन्या हिमा तिक्ता कासपित्तकफापहा । विषकुष्ठश्वासहरा 'नृपे' प्रोक्ता रसायनी ॥९३०॥ यकृत्पित्तहरा चैव गलरोगहरा तथा । बृंहणी चैव बल्या च त्वगामयहरा 'नृपे' ॥ ९३१ ॥ भेदिनी ग्रंथिनी चैव ह्यग्निदग्धव्रणापहा । विस्फोटरक्तपित्तघ्नी 'कैये' कफज्वरापहा ॥ ९३२ 'द्रव्ये' सरा प्लीहहरा 'भावे' नेत्र्या स्मृता बुधैः । १६ बर्हिचूडा । म० मयूरशीखा, मोरशेंडा । गु० मोरशिखा । शिखिनी बर्हिचूडा स्यात् शिखालु सुशिखा शिखा ॥ ९३३ ॥ केकी शिखा मयूरस्य शिखेति 'राजनामके' । 'द्रव्यरत्नाकरे' चैव मधुराव्हा मधुच्छदा ॥ ॥ ९३४ ॥ मयूराव्हा सहस्रा च प्रोक्ता 'मदनपालके' । सहस्राक्षी नीलकंठशिखा 'भावप्रकाशके' ॥ ९३५ ॥ गुणाः । बर्हिचूडा रसे स्वादु मूत्रकृच्छ्रहरा तथा । बालग्रहहरा चैव वश्यकर्मप्रदा 'नृपे' ॥ ॥ ९३६ ॥ 'द्रव्ये' कफातिसारघ्नी पित्तश्लेष्मातिसारजित् । १७ क्षीरिणी । म० पिसोळा । गु० पिसोळा । क्षीरिणी काचनक्षीरी कर्षणी बहुपर्णिका ॥ ९३७ ॥ तिक्तदुग्धा हैमवती हिमदुग्धा हिमावती । हि

माद्रिजा पीतदुग्धा यवचिंची हिमोद्भवा ॥ ९३८ ॥ हैमी तु हिमजा चैव प्रोक्ता 'राजानिघंटके'। घर्षणी हेमदुग्धेति प्रोक्ता 'धन्वंतरी' ध्रुवं ॥ ॥ ९३९ ॥ यवचित्रा काचनी च 'कैयदेवे' स्मृता बुधैः। अष्टभूसख्यका प्रोक्ता भिषक्शास्त्रविशारदैः ॥ ९४० ॥ गुणाः ॥ क्षीरिणी तिक्तशीता च रेचिनी शोफवातहा। कृमीकफहरा चैव पित्तज्वरहरा 'नृपे' ॥ ९४१ ॥ १८ स्वर्णक्षीरी। म० काटेधोत्रा। गु० दारुडी। स्वर्णक्षीरी स्वर्णदुग्धा स्वर्णाव्हा रुक्मिणी तथा। सुवर्णहेमदुग्धी च हेमक्षीरी तु कांचनी ॥ ९४२ ॥ प्रोक्ता 'राजानिघंटे' तु भिषक्विद्याविचक्षणैः। सुवर्णक्षीरी हेमांगा तथैव कनकक्षीरी ॥ ९४३ ॥ 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजां वरैः। क्षीरगर्भा दुग्धिकेति 'द्रव्यरत्नाकरे' स्मृता ॥ ९४४ ॥ हेमाव्हा हेमदुग्धा च तथा हेमावती 'मदे'। पटुपर्णी हैमवती पीतदुग्धा च चोककः ॥९४५॥ प्रोक्ता 'भावप्रकाशे' तु भिषक्विद्याविचक्षणैः। प्रोक्ता 'गणनिघंटे' तु भिषग्भिस्तिक्तदुग्धिका ॥ ९४६ ॥ विंशत्संख्यया भिषग्भिस्तु प्रोक्ता शास्त्रविचक्षणैः। गुणाः। स्वर्णक्षीरी हिमा तिक्ता कृमिपित्तकफापहा ॥ ९४७ ॥ मूत्रकृच्छ्राश्मरीशोकदाहज्वरहरा 'नृपे'। उत्क्लेशकारिणी चैव 'मदे' मदकरा स्मृता ॥९४८॥ विषपित्तहरा चैव रक्तपित्तहरा 'धने'। कंडूहरा 'कैयदेवे' रक्तानाहहरा तथा ॥ ९४९ ॥ कामलाघ्नी तथा प्रोक्ता वैद्यविद्याविशारदैः। वातास्रहा 'द्रव्यरत्ने' पाडुहा 'गणनामके' ॥ ९५० ॥ १९ त्रायमाणा। म० गु० त्रायमाण। त्रायमाणा कृतत्राणा त्रायंती त्रायमाणिका। बलभद्रा सुकामा च वार्षिकी गिरिजानुजा ॥ ९५१ ॥ मंगल्याव्हा देवबला पालिनी भयनाशिनी। अवनी रक्षणी त्राणा संप्रोक्ता 'राजनामके' ॥ ९५२ ॥ बलदेवा तु विदिता तथैव गिरिसानुजा। 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजां वरैः ॥ ९५३ ॥ आर्द्राद्रिसानुजा चैव तथा वार्षिकत्राणिका। 'कैयदेवे' तु संप्रोक्ता सुदला च सुनालिका ॥ ॥९५४॥ 'द्रव्यरत्नाकरे' चैव सुदलसंज्ञा प्रकीर्तिता। तथा 'त्वमरकोशे' तु प्रोच्यते बलभद्रिका ॥ ९५५ ॥ गुणाः। त्रायमाणा भवेच्छीता मधुरा

गुल्महा तथा । रक्तज्वरकफघ्नी च भ्रमतृष्णाक्षयापहा ॥ ९५६ ॥
ग्लानिहा विषछर्दिघ्नी प्रोक्ता 'राजनिघण्टके' । कटु पित्तास्रशूलघ्नी
प्रोक्ता 'धन्वन्तरिनिघण्टके' ॥९५७॥ हृद्रोगरक्तगुल्मघ्नी पित्तहा 'कैयदेवके'।
'मदे' वैद्ये सरा प्रोक्ता कफपित्तहरा 'गणे' ॥ ९५८ ॥ ७०
रुदती । म० रुद्रवती । गु० पाल्यो, लाणो । रुदती तु स्रवत्तोया
सञ्जीवन्यमृतस्रवा । रोमाञ्चिका महामांसी चणपत्री सुधास्रवा ॥ ९५९ ॥
प्रोक्ता 'राजनिघण्टे' तु भिषग्विद्याविशारदैः । गुणाः । रुदती तु क
टुस्तिक्ता कषाया चोष्णकारका ॥९६० ॥ रक्तपित्तक्रिमिहरा कफश्वास
विनाशिनी । रसायनी मेहहरा 'राजनामनिघण्टके' ॥ ९६१ ॥ ७१
ब्राह्मी । म० ब्राह्मी । गु० ब्राह्मी । ब्राह्मी सरस्वती सौम्या सुरश्रेष्ठा
सुवर्चला । कपोतवेगा वैधात्री दिव्यतेजा महौषधी ॥ ९६२ ॥ स्वायम्भुवी
सौम्यलता सुरेज्या ब्रह्मकन्यका । मण्डूकमाता मत्स्याक्षी मण्डूकी सुरसा
तथा ॥ ९६३ ॥ मेध्या वीरा भारती च वरा तु परमेष्ठिनी । दिव्या च
शारदा चैव प्रोक्ता 'राजनिघण्टके' ॥ ९६४ ॥ सोमा कपोलवङ्का च
त्वष्टा ब्रह्मसुवर्चला । 'धन्वन्तरिनिघण्टे' तु भिषग्भिः परिकीर्तिता ॥९६५॥
तथा सत्यवती चैव स्मरणी ब्रह्मचारिणी । सत्यनामा ब्रह्मसोमा तन्वी

' भावप्रकाशके '। २२ जलब्राह्मी । म० गु० वांव । ब्राह्मी तु क्षुद्र-पत्रान्या लघुब्राह्मी जलोद्भवा ॥ ९७ ॥ प्रोक्ता ' राजनिघंटे ' तु वैद्य-विद्याविचक्षणैः । हिलमोची शंखवरा जलब्राह्मी तथैव च ॥ ९७५ ॥ ' केयदेवे ' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः । बांवी वामी फेनिला च जलजा हिलमोचिका ॥ ९७३ ॥ ' द्रव्यरत्नाकरे ' चैव संप्रोक्ता रुद्रसंख्यका । बांवी तिक्ता रसे चोष्णा सरामानिलहा ' नृपे ' ॥ ॥ ९७४ ॥ शोफकुष्ठव्रणघ्नी च ' केये ' पित्तकफापहा । २३ वंदाक । म० बांदें, बांडगूळ । गु० वांदो । वंदाक पादपरुहा शिखरी तरुरो-हिणी ॥ ९७५ ॥ वृक्षादनी वृक्षरूढा कामवृक्षस्तु शेखरी । केशरूपा तरुरुहा तरुस्था गंधमोहिनी ॥ ९७६ ॥ कामिनी तरुरुक् श्यामा द्रुपदी ' राजनामके ' । वंदारुः स्याद्वृक्षरुहा तथैव पद्मरूपिणी ॥ ९७७ ॥ ' धन्वंतरिनिघंटे ' तु संप्रोक्ता भिषजां वरैः । कामना नीलवर्णी च नीलवल्ली जयद्रुमा ॥ ९७८ ॥ जीवंती तु तथा प्रोक्ता ' केये ' तु पदरोहिणी । तथा ' भावप्रकाशे ' तु वृक्षभक्षा प्रकीर्तिता ॥ ९७९ ॥ द्रुपद्रुहा नररुहा कामाता चंद्रको 'गणे' । गुणाः । वंदाकस्तु भवेत्तिक्तः शिशिरः कफपित्तजित् ॥९८०॥ श्रमहृत् सिद्धिदो वृष्यो ' नृपे ' प्रोक्तो रसायनः । ' धन्वतरिनिघंटे ' तु संप्रोक्तो व्रणरोपणः ॥ ९८१ ॥ कफ-वातहरः प्रोक्तो ' केये ' रक्तविषापहः । २४ अरण्यकुलत्थिका । म० विरब्ध्या । गु० विमड । ततोरण्यकुलित्था च कुचाली कुंभकारिका ॥ ९८२ ॥ चक्षुष्या तु कुलित्था च लोचने हितकारिका । दृक्प्रसादेति संप्रोक्ता भिषग्भि 'र्नृपनामके' ॥ ९८३ ॥ ' धन्वंतरिनिघंटे ' तु वैद्यैः प्रोक्ता मलापहा । 'केयदेवनिघंटे' तु कुकारी चिपिट स्मृता ॥९८४॥ दशसंख्या भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः। गुणाः । कुलत्था लोचनहिता तिक्ताऽर्शःशूलहा कटु ॥ ९८५ ॥ विबंधाध्मान ' हृद्रोगे ' चक्षुष्या व्रणरोपिणी । नेत्रस्रावहरश्चैव चरस्थिरविषापहा ॥ ९८६ ॥ विस्फोट-नेत्रकंडूहा नेत्रव्रणहरा ' धने ' । अर्शोहिकास्रहा प्रोक्ता ' गणनामनिघं-टके ' ॥ ९८७ ॥ २५ तंदुलीयक । म० तांदुळजा । गु० तांदळजो

तदुलीयस्तंडुली च तदुलीयकप्रथिलो । वहुवीर्यो मेघनादो सुशाकस्तु घनस्वनः ॥ ९८८ ॥ पथ्यशाकस्तु स्फूर्जन्यः स्वनिताव्हस्तथैव च । वीरस्तु तदुलश्चैव प्रोक्तो 'राजनिघण्टके' ॥ ९८९ ॥ पिडिरस्तु घनश्चैव ततस्तदुलवल्लिका । 'धन्वन्तरिनिघंटे' तु सप्रोक्ता भिषजा वरे ॥९९०॥ घाटालस्तु खटालश्च काडीरस्तदुली तथा । विषघ्नो मारिषश्चैव मारीष 'कैयदेवके' ॥ ९९१ ॥ ततो 'मदनपाले' तु मारिष परिकीर्तितः । 'भावप्रकाशे' सप्रोक्तो भिषग्भिरस्वल्पमारिष ॥ ९९२ ॥ गुणाः । तदुलीयस्तु शिशिरो मधुरो विषनाशन । रुचिकृद्दीपनः पथ्य पित्तदाहभ्रमापह ॥ ९९३ ॥ प्रोक्तो 'राजनिघंटे' तु वैद्यविद्याविचक्षणैः । असृक्ज्वरहरश्चैव प्रोक्तो 'गणनिघंटके' ॥ ९९४ ॥ रक्तपित्तहरो रूक्षो रसे पाके मधु'धने' । मदपित्तविषासृग्घ्नो 'कैये' स्यात्मूत्रमूत्रजित् ॥ ॥ ९९५ ॥ तत मूत्रमलघ्नश्च 'मदे' प्रोक्तो भिषग्जनै । ७६ चिविल्लिका । म० चिल्घोळ गु० । झीणी लुणी । "चिविल्लिका रक्तदला स्वच्छदा स्यात्क्षुद्रघोली सदुमाभपत्रिका*" ॥ ९९६ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रपरायणै । दलाम्ललोहिता चिल्ली मधुपत्रा तथैव च ॥ ९९७ ॥ क्षीरपत्रा क्षीरदला वास्तुकी 'धन्वनामके' । बृहद्दला तु रक्ता च गौडवास्तुक 'द्रव्यके' ॥९९८॥ तथा 'मदनपाले' तु सम्यक् प्रोक्ता महद्दला । गुणाः । चिल्ली कटुः कषाया च जीर्णज्वरहरा तथा ॥ ९९९ ॥ रसायनीति सप्रोक्ता 'राजनामनिघण्टे' । गुरा शीता क्षीरदा च रक्तजित् निमिहारका ॥ १००० ॥ त्रिदोषघ्नी 'मदे' प्रोक्ता भिषग्भि शास्त्रवेत्तृभि । श्लेष्मपित्तप्रमेहघ्नी मूत्रकृच्छ्रहरा तथा ॥ १००१ ॥ 'धन्वन्तरिनिघंटे' च सप्रोक्ता रक्तशारिणी । अग्निदिवरा 'द्रव्ये' 'भावे' वातहरा तथा ॥ १००२ ॥ श्लेष्मघ्न् पुष्टिदचैव च्छमरस्यनिषूदन । ७७ हस्तिशुंडी । म० गु० हस्तिशुंडी । हस्तिशुंडी महाशुंडी शुंडी घमरपत्रिका ॥ १००३ ॥ गुणा । हस्तिशुंडी तु रूक्षा च सन्निपातज्वरापहा । प्रोक्ता 'राजनिघंटे' तु पुराव

* इत्यन्ये वा पाठः ।

नामिपवरैः ॥ १००४ ॥ २८ कुटुंबिनी । म० पहारकुट्वी, शिरदोडी, मोठी कावळी । गु० खरणेर । कुटुंबिनी पयस्या च क्षीरिणी जलकामुका । वक्रशल्या दुराधर्षा क्रूरकर्मा,झिरिंटिका ॥ १००५ ॥ शीता प्रहारजाया च शीतला तु जलेरहा । प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रविशारदैः ॥ १००६ ॥ अर्कपुष्पी वज्रशल्या दुरामोवा भिरिंटिका । 'कैयदेवनिघंटे' तु संप्रोक्ता भिषजा वरैः ॥ ७ ॥ ततो 'मदनपाले' तु जलकामाऽभिरेणुका । पयस्था जलकामा च चित्रशल्या दुरामया ॥ ॥ १००८ ॥ एकविंशतिसंख्येति । प्रोक्ता वैद्यविचक्षणैः । गुणाः । कुटुंबिनी तु मधुरा ग्राहिणी कफपित्तहा ॥ १००९ ॥ कंडूरक्तव्रणहरा 'नृपे' प्रोक्ता रसायनी । २९ स्थलपद्मिनी । म० स्थलकमळणी । गु० स्थलकमल । सुगंधमूला पद्माऽह्वा तथैव स्थलपद्मिनी ॥ १० ॥ तथैवांबुरुहा चेति चारटी पद्मचारिणी । लक्ष्मीश्रेष्ठा तु लक्ष्मीं च रम्या चैव सुपुष्करा ॥ ११ ॥ चारस्थलरुहा चैव तथा पद्मावती मता । ततः पुष्करवर्णी त्र तथा पुष्करिणी मता ॥ १२ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रपरायणैः । गवमूलातिपत्रा च पद्मचारी सुपुष्कला ॥ १३ ॥ 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजांवरे । 'द्रव्यरत्नाकरे' चैव वर्तकी परिकीर्तिता ॥ १४ ॥ व्यथा त्वतिविषा चैव चारटी 'मदने' स्मृता । तथा स्वतिचरा चैव प्रोक्ता 'भावप्रकाशके' ॥ १५ ॥ चतुर्विंशतिसंख्याका प्रोक्ता वैद्यविचक्षणैः । गुणाः । तिक्ता शीता च वातघ्नी रक्तपित्तहरा तथा ॥ १६ ॥ मेहातिसारहा प्रोक्ता 'राजनामनिघंटके' । उष्णा कटुः कफो-द्भूतवातहा मूत्रकृच्छ्रजित् ॥ १७ ॥ अश्मरीशूलविषहा श्वासकासहरा 'भवे' । मोहापस्मारहा प्रोक्ता 'धन्वंतरिनिघंटके' ॥ १८ ॥ श्लेष्मश्वासास्रकृच्छ्रघ्ना 'मदे' प्रोक्ता भिषग्जनैः । 'गणनामनिघंटे' तु शूलघ्ना परिकीर्तिता ॥ १९ ॥ तृष्णादाहप्रशमनी 'द्रव्यरत्नाकरे' स्मृता ३० नागदमनी । म० नागदवण । गु० नागदवण । जंबूर्नाचवती वृत्ता वृत्तपुष्पा च जान्वी । मदघ्नी नागदमनी दुर्धर्षा दुःसहा तथा ॥ २१ ॥ प्रोक्ता 'राजनिघंटे' तु भिषग्भिः शास्त्रवित्तमैः । महा

योगेश्वरी चैव तथा योगेश्वरीश्वरी ॥ ३२ ॥ नागदंती नागपत्री रास्ना सर्वभयापहा । सर्वगंधा सर्वसहा विषदंष्ट्रा विषापहा ॥ ३३ ॥ 'कैय-देवनिघंटे' तु संप्रोक्ता भिषजांवरैः। दमनी नागगंधा च नागा भुजंगपर्णिनी ॥ ३४ ॥ 'द्रव्यरत्नाकरे' चैव भिषग्भिः परिकीर्तिता। प्रोक्ता 'म-दनपाले' तु नागपत्रा भुजंगिनी ॥ ३५ ॥ बल्लामोटा नागपुष्पी प्रोक्ता 'भावप्रकाशके । गुणाः । ततस्तु नागदमनी तिक्तोष्णा च त्रिदोषहा ॥ ३६ ॥ कटुतिक्तोदराध्मानहारिणी कोष्ठशोधिनी। 'राजनामनिघंटे' तु प्रोक्ता वैद्यैर्न संशयः ॥ ३७ ॥ मोहापस्मारदोषघ्नी 'धन्वंतरिनिघंटके'। तृष्णादाहहरा प्रोक्ता 'द्रव्यनामनिघंटके' ॥ ३८ ॥ व्रणरक्षोग्रहघ्नी च सर्पोंद्रुवविषापहा । लूताज्वालागर्दभघ्नी प्रोक्ता 'कैयनिघंटके' ॥ ॥ ३९ ॥ कफवातहरा प्रोक्ता वैद्यै 'द्रव्यनिघंटके'। जयंकरा च ध-नदा 'भावे' च सुमतिप्रदा ॥ ४० ॥ कोष्ठशूलहरा चैव योनि-दोषहरा 'गणे'। ३१ नागदंती । म० नागाळी । गु० नागदमुकणी

॥ ९० ॥ असीतका सूक्ष्मपत्रा 'केयदेवनिघंटके'। गुणाः। विष्णु-क्रांता कटुस्तिक्ता कफवातहरा तथा ॥ ९१ ॥ विषहा पावनी चैव शुभदायी 'नृपे' स्मृता। बुद्धिस्मृतिकरा चैव अर्णकिमिकफापहा ॥ ॥ ९२ ॥ 'केयदेवे' भिषक्छ्रेष्ठैः संप्रोक्ता शास्त्रवेतृभिः। ३३ कुणंजर। म० कुंजीर। गु० कणेझरो। कुणंजरः कुणंजी च कुणंजो-रण्यवास्तुकः ॥ ९३ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्छास्त्रपरायणैः। सप्तसंख्येति संप्रोक्ता पुरातनचिकित्सकैः ॥ ९४ ॥ गुणाः। कुणंजो म-धुरो रुच्यो दीपनः पाचनो 'नृपे'। हिमो वृष्यो मेहहरो रक्तपित्तहरो 'द्रवे' ॥ ९५ ॥ ३४ भूम्यामलकी। म० भुईआंवळी। गु० भोंआंवळी। ततो भूम्यामलो ताली शिवुत्रा दृढपादिका। उच्चटा चारटी दृष्या भूधात्री च हिमालया ॥ ९६ ॥ वीराऽजरा विश्वपर्णी तथा हि भयदा मता। विंदुपत्री विपघ्नी च बहुवीर्या तमालिका ॥ ९७ ॥ वितु-न्निकेति संप्रोक्ता 'राजनामनिघंटके'। तामला च जटाताली तमालं च तमालिनी ॥ ९८ ॥ वितुन्नं तातमालं च भूधात्री तु तमालकी। झटामला झटा चैव 'कोशे' प्रोक्ता भिषग्वरैः ॥ ९९ ॥ उत्तमा दृढपादी च बहुपुत्रा शिवा तथा। चामलकी दृढा माल्या हिमा सूक्ष्मफला तथा ॥ ॥ ६० ॥ 'कैयदेवनिघंटे' तु प्रोक्ता वैद्यविशारदैः। 'द्रव्यरत्नाकरे' चैव जटांता च शिवा स्मृता ॥ ६१ ॥ ततो 'मदनपाले' तु संप्रोक्ता चाजटा तथा। तद्वद्बहुफला चैव प्रोक्ता 'भावप्रकाशके' ॥ ६२ ॥ सुछेकिनी विष्णुपर्णी तमालका तथा 'गणे'। गुणाः। भूम्यामली क-षायाम्ला शिशिरा मूत्ररोगहा ॥ ६३ ॥ हिमा-वातकरा पांडुपित्तरक्तकफा-पहा। विषकुष्ठश्वासहरा तृषादाहहरा 'नृपे' ॥ ६४ ॥ हिध्माक्षतक्ष-यहरा प्रोक्ता 'केयनिघंटकै'। ३५ गोरक्षी। म० गोरक्षचिंच। गु० गोरख आंवली, रुखडो। गोरक्षी सर्पदंडी च दीर्घदंडी सुदंडिका ॥ ॥ ६५ ॥ चित्रला गंधबहुला गोपाली पंचपर्णिका। प्रोक्ता 'राजनि-घंटे' तु वसुसंख्या भिषग्जनैः ॥ ६६ ॥ गुणाः। गोरक्षी मधुरा तिक्ता शिशिरा दाहपित्तनुत्। विस्फोटवांत्यतीसारज्वरशोषविनाशिनी ॥

॥ ६७ ॥ ३६ **गोलोमी** । म० पायरा, पायरीभेद । गु० गोलोमी । गोलोमी गोधुर्मी चैव गोजा क्रोष्टुकपुच्छिका । गोसभवा प्रस्तरणी प्रोक्ता ' राजनिघण्टके ' ॥ ६८ ॥ पट्सख्या भिषग्भिस्तु सप्रोक्ता नैव सशय । गुणाः । गोलोमी तु कटुस्तिक्ता त्रिदोषघ्नी हिमा ' नृपे ' ॥६९॥ रक्तशोधा आह्णिणी च दीपनी तत्र सस्मृता । अश्मरीमेहहा प्रोक्ता 'द्रव्यनाग्नि निघटके ' ॥ ७० ॥ ३७ **दुग्धफेनी** । म० गु० दूधफेनी । पय-फेनी फेनदुग्धा पयःस्विनी । लूतारि अगक्षेतुश्च गोजापर्णीति, ' राजके ' ॥ ॥ ७१ ॥ पट्सख्या कथिता पूर्वे पुरातनभिषग्वरै । गुणाः । दुग्धफेनी कटुस्तिक्ता कषाया शिशिरा तथा ॥ ७२ ॥ विषव्रणहरा रुच्या ' नृपे ' प्रोक्ता रसायनी । ३८ **चागेरी, क्षुद्राम्लिका** । म० आबरती । गु० नहानो चुको । क्षुद्राम्ला चैव चागेरी चुक्राम्ला चुक्रिका तथा ॥ ॥ ७३ ॥ लोणाम्ला च चतुःपर्णी लोणी लोणाम्लपत्रिका । अवष्टा-म्लवती चाम्ला तथा दतशठा मता ॥ ७४ ॥ शस्त्रागा चाम्लप त्रीति प्रोक्ता ' राजनिघटके ' । तथाम्ललोटिका लोटा ' धन्वन्तरिनि घण्टके ' ॥ ७५ ॥ अम्लिका ऽम्लदका चैव लोटिका लोणिका तथा । सुनीला राजपाता च अम्ला चाम्लदोलका ॥ ७६ ॥ ' कैयदेव नि-घण्टे ' तु प्रोक्ता वैद्यविचक्षणै । अश्मतकोऽम्लपत्रा च कुशली शफरी

तु भिषक्शास्त्रपरायणैः। 'धन्वंतरौ' गंधकारी जयकारी प्रकीर्तिता ॥ ८४ ॥ जयारुणा खदिरिका गंडकाली प्ररोधिनी। 'केयदेवनिघंटे' तु रुहा च परिकीर्तिता ॥ ८५ ॥ तथा 'मदनपाले' तु लोहिता मोहिनी स्मृता। गुणाः। रक्तपादी कटुः शीता पित्तातिसारजित्तथा ॥ ८६ ॥ शोफदाहश्रमश्वासव्रणकुष्ठकफापहा। कुष्ठघ्नी 'राजनाम्नीति' निघंटे परिकीर्तिता ॥ ८७ ॥ कफपित्तहरा चैव योनिरोगविनाशिनी। रक्तपित्तहरा 'प्रोक्ता' केयदेवनिघंटके' ॥ ८८ ॥ रक्तदाहविषघ्नी च 'द्रव्यरत्नाकरे' स्मृता। विसर्पलूताभूतघ्नी 'मदे' तु व्रणरोपणी ॥ ८९ ॥ ४० वैपरीत्या लज्जालुः। म० थोर लाजाळू। गु० मोटी रीसमणी। लज्जालुर्वैपरीत्या च तथैव तु बृहद्दला। अलम्बुषा वेदसंख्या संप्रोक्ता 'राजनामके' ॥ ९० ॥ गुणाः। बृहल्लज्जालुका चोष्णा कटु कफविनाशिनी। आमहा रसनिष्पत्तिर्नानाविज्ञानदा 'नृपे' ॥ ९१ ॥ 'द्रव्यरत्नाकरे' प्रोक्ता व्रणपित्तातिसारजित्। 'मदे' तु श्लेष्मपित्तघ्नी योनिरोगहरा स्मृता ॥ ९२ ॥ ४१ हंसपादी। म० बारीक लाजाळूभेद। गु० हंसपादी। त्रिपदा रक्तपादी च तथैव हंसपादिका। घृतमंडलिका चैव विश्वग्रंथिस्त्रिपादिका ॥ ९३ ॥ त्रिपादी कीटमारी च हेमपादी मधुस्रवा। कर्णाटी ताम्रपत्री च विक्रांता सुवहा तथा ॥ ९४ ॥ प्रह्लादनी पदांगी च शीतांगी सुतपादुका। संचारिणी च पदिका प्रल्हादी कीटपादिका ॥ ९५ ॥ गोधापदी च हंसांघ्रिः धार्तराष्ट्रपदी तथा। हंसपादी च विज्ञेया 'राजनामनिघंटके' ॥ ९६ ॥ कीटनामा कीटमाता 'केये' तु हविर्मंडला। तथा 'गणनिघंटे' तु घृतमंडा मधुस्रवा ॥ ९७ ॥ गुणाः। हंसपादी कटूष्णा च विषभूतश्रमापहा। अपस्मारहरा चैव 'नृपे' प्रोक्ता रसायनी ॥ ९८ ॥ विजया तु 'धने' प्रोक्ता भिषग्भिः शास्त्रपारगैः। हिमा गुर्वी रोपणी च रक्तदाहातिसारजित् ॥ ९९ ॥ विसर्पलूताभूतघ्नी व्रणहा 'केयदेवके'। ४२ अश्वकाथरिका। म० घोडाकाथरा। गु० घोडाकाथरा। कायरा हयपर्यायैः काथरातैः प्रकीर्तिता ॥ १०० ॥ वेदसंख्येति संप्रोक्ता 'राज-

नाम्नि ' निघटके । गुणाः । अश्वकार्यारका तिक्ता वातघ्नी दीपनी ' नृपे ' ॥ १ ॥ ४३ श्वेता पुनर्नवा । म० पांढरी घेंटुळी । गु० विष खापरो । पुनर्नवा विशाखश्च कठिल्ल शशिवाटिका । पृथ्वी च सितवर्षा भूर्दीर्घपत्रः कठिल्लक ॥ २ ॥ प्रोक्ता ' राजनिघंटे ' तु भिषक्शास्त्रविशारदैः । शिवाटिका वृश्चिकश्च महावर्षाभवस्तथा ॥ ३ ॥ श्वेतमूलस्तु सम्प्रोक्ता ' धन्वंतरिनिघण्टके ' । क्षुद्रपत्रो वर्षकेतु 'केये' तु रक्तवृंतकः ॥ ४ ॥ गुणाः । श्वेता पुनर्नवा तूष्णा तिक्ता कफविनाशिनी । कासहृद्रोगशूलघ्नी पांडुशोफविनाशिनी ॥ ५ ॥ वातहा भिषजा नाथैः प्रोक्ता ' राजनिघण्टे ' । शोफोदरहरा ' द्रव्ये ' प्रोक्ता वैद्यैर्न संशय ॥ ॥ ६ ॥ मधुरा तु गुरुश्चैव वातशोथहरा तथा । रसायनीति च वैभि प्रोक्ता ' मदनपाल्के ' ॥ ७ ॥ रूक्षा क्षतहरा प्रोक्ता वैद्यैः ' धन्वनिघंटके ' । दीपना वातकफहा हृद्या रुच्यार्शनाशिनी ॥ ८ ॥ नगोदरगरघ्नीति प्रोक्ता ' केयनिघण्टके '। ४४ रक्ता पुनर्नवा । म० तांबडी घेंटुळी । गु० साटोडी । पुनर्नवा तु रक्ताख्या क्रूरा मंडलपत्रिका ॥ ९ ॥ रक्तकांडा वर्षकेतुर्लोहिता रक्तपत्रिका । वैशाखी रक्तवर्षाभू शोफघ्नी रक्तपुष्पिका ॥ १० ॥ पित्तखरा विषघ्नी च

नीला श्यामा नीलपुनर्नवा ॥ १८ ॥ कृष्णाख्या नीलवर्षाभूर्नीलाद्रिनी स्वा-
भिधान्विता । गुणाः । नीला पुनर्नवा तिक्ता कटूष्णा च रसायनी ॥१९॥
हृद्रोगपांडुश्वयथुश्वासवातकफापहा । ४६, ४७ श्वेता वसु, रक्ता वसु ।
म० पांढरी वसु, तांबडी वसु । गु० धोळी वसु, राती वसु । वसुकोथ
वसुः शैवो वसश्च शिवमल्लिका ॥ २० ॥ ततः पाशुपतश्चैव सुरेष्टः
शिवशेखरः । तथा शिवमतश्चैव ग्रहसंख्येति ' राजके ' ॥ २१ ॥
गुणाः । श्वेतरक्तवसुश्चैव कटुस्तिक्तोष्ण एव च । पाके शीतो दीपनो च
हृज्जो णीनिलगुल्महे ॥ २२ ॥ ततस्तु श्वेतवसुको 'नृपे' प्रोक्तो रसायनः ।
४८ सर्पिणी । म० गु० सर्पिणी । भुजंगी सर्पिणी चैव कुंडली पन्नगी
फणी ॥ २३ ॥ भोगी ' राजनिघंटे ' तु षट् प्रोक्ता भिषजांवरैः ।
गुणाः । सर्पिणी तु विषघ्नी च कुचश्रुद्धिमदा ' नृपे ' ॥ २४ ॥ ४९ वृ-
श्चिका । म० स्वाजकोलती । गु० आगियो । वृश्चिका नलपर्णी च पि-
च्छिलाप्यलिपत्रिका । प्रोक्ता ' राजनिघंटे ' तु वेदसंख्या भिषग्जनैः ॥
॥ २५ ॥ वृश्चिका पिच्छला ऽम्ला च हात्रगृध्याविहा. ' नृपे ' । ५०
मत्स्याक्षी । म० जलपिंपळी । गु० रतवेलियो । ब्राह्मी वयस्या मत्स्या-
क्षी मीनाक्षी सोमवल्लरी ॥ २६ ॥ प्रोक्ता ' राजनिघंटे ' तु भिषक्शा-
स्त्रपरायणैः । वल्ही तु शफनेत्रा च ' द्रव्यरत्नाकरे ' स्मृता ॥२७॥ तथ
' मदनपाले ' तु वाल्हिका परिकीर्तिता । गुणाः । मत्स्याक्षी शिशिरा
रुच्या व्रणकफहरा ' नृपे ' ॥ २८ ॥ ' द्रव्यरत्ने ' च मेदीति भिष-
ग्भिः परिकीर्तिता । ग्राहिणी वातला चैव पाके तु कटुका स्मृता ॥ २९॥
कफपित्तास्रकुष्ठघ्नी ' कैयदेवे ' स्मृता बुधैः । ५१ गुंडाला । म० गों-
डाळ । गु० गोंडाळ । गुंडाला तु जलोद्भूता गुच्छबुघ्ना जलाश्रया
॥ ३० ॥ प्रोक्ता ' राजनिघंटे ' तु भिषक्श्रेष्ठैर्न संशयः । कुंभिका वारि-
पर्णीति प्रोक्ता ' भावप्रकाशके ' ॥ ३१॥ गुणाः । गुंडाला कटुतिक्तोष्णा
व्रणशोफहरा ' नृपे ' । कृमिहा ' द्रव्यरत्ने ' तु ' भावे ' प्रोक्ता हिमा सरा
॥ ३२ ॥ दोषत्रयकरी रूक्षा ज्वरघ्नी रक्तशोषहा । ५२ भूपाटली । म०
भुईपाडळ । गु० भुईपाडळ । भूपाटली च भूकुंभी भूताली रक्तपुष्पिका ॥

॥ ३३ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्‌विद्या विशारदैः । गुणाः । भूपाटली कटूष्णा च पारदे सुप्रयोजिका ॥ ३४ ॥ 'नृपे' 'द्रव्ये' तु बला तथा वीर्यविवर्द्धिनी । ९३ पांडुफली । म० पाटली, पाढरफली । गु० शीणवी । पाडु पाडुफली चैव धूसरा वृत्तबीजका ॥ ३५ ॥ फली भूरिफली चैव पाटली 'राजनामके' । गुणाः । पाडुफली तु शिशिरा कृच्छ्ररक्तहरा बला ॥ ३६ ॥ मूत्रघातहरा तृष्णापित्तहा 'राजनामके' ९४ केना । म० गु० केना । केना तु क्षुरिका पत्री पर्वमूला त्वचिप्रिया ॥ ३७ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्‌विद्याविशारदैः । कर्णमोदा तु सप्रोक्ता 'द्रव्यरत्नाकरे' तथा ॥ ३८ ॥ गुणाः । केना तु मधुरा शीता स्तन्यदा रुचिकृत् 'नृपे' । 'द्रव्ये' वृष्या मेहहरा रक्तपित्तहरा स्मृता ॥ ३९ ॥ ९५ ब्रह्मदंडी । म० उटकटारी । गु० उटकटो । ब्रह्मदण्ड्यजदडी च वरपत्रफला 'नृपे' । गुणाः । ब्रह्मदंडी कटूष्णा च कफशोफविनाशिनी ॥ ४० ॥ वातहंत्रीति सप्रोक्ता 'राजनामनिघंटके' । ९६ द्रवंती । म० लघु उंदिरकानी । गु० नहानी उंदरकनी । द्रवंती शम्बरी चित्रा न्यग्रोधी शतमूलिका ॥ ४१ ॥ मत्स्यश्रेणी वृषा चडा पत्रश्रेण्याखुपर्णिका । प्रतिपर्णी मूषिकाह्वा विख्याता तु शिफा च सा ॥ ४२ ॥ सहस्रमूली संप्रोक्ता 'राजनामनिघंटके' । गुणाः । द्रवंती मधुरा शीता रसबन्धकरी परा ॥ ४३ ॥ ज्वरक्रिमीशूलहरा 'नृपे' प्रोक्ता रसायनी । ९७ द्रोणपुष्पी । म० कुंभा, गोमा । गु० कुबो । द्रोणपुष्पी दीर्घपत्रा कुम्भयोनि कुतुम्बिका ॥ ४४ ॥ चित्रक्षुप कुतुबा च सुपुष्पा चित्रपत्रिका । प्रोक्ता 'राजनिघंटे' तु वैद्यशास्त्रविशारदैः ॥ ४५ ॥ द्रोणा छत्रा कुरवा च 'कैयदेवे' स्मृता बुधैः । 'द्रव्यरत्नाकरे' चैव पालिन्द्री परिकीर्तिता ॥ ४६ ॥ तथा 'मदनपाले' तु प्रोक्तः श्वसनको ध्रुव । गुणाः । द्रोणपुष्पी कटूष्णा च रुच्या वातकफापहा ॥ ४७ ॥ अग्निमांद्यहरा चैव वातज्वरनिवारिणी । 'राजनामनिघंटे' तु संप्रोक्ता भिषजा वरैः ॥ ४८ ॥ पाके स्वादु तु रूक्षा च भेदिनी वातपित्तहा । कफामकामलाशोफनाशिनी 'कैयदेवके' ॥ ४९ ॥ गुरु

श्च्था क्षामहरा प्रोक्ता ' मदनपालके '। तमकश्वासजित्प्रोक्ता वैद्ये ' भां-
वप्रकाशके ' ॥ ५० ॥ ५८ महाद्रोणा । म० देवकुंभा । गु० मोटो
कुबो । महाद्रोणा कुरंबा च देवपूर्वक एव च। दिव्यपुष्पी महाद्रोणी
देवी कांडा तथैव च ॥ ५१ ॥ देवद्रोणा त्रिपर्णिस्तु संप्रोक्ता ' राजना-
मके '। कौंडिन्यस्तु महादेवस्तथा देवकुरंबकः ॥ ५२ ॥ कुसुंभकश्च
संप्रोक्तो ' कैयदेवनिघंटके '। वृक्षसारस्तु संप्रोक्तो वैद्ये ' मदनपालके '
॥ ५३ ॥ गुणाः। देवकुंभा कटुस्तिक्ता मेध्या मूतार्तिवातहा । कफाग्नि-
मांद्यहरप्रोक्ता ' नृपे ' पारदशोधिनी ॥ ५४ ॥ ५९ झेंडुक । म० गु०
झेंडू । झंडूः स्यात्स्थलपुष्पा तु झेंडूको ' राजनामके '। झेंडुः कटुः
कषायश्च भूतज्वरहरो ' नृपे ' ॥ ५५ ॥ ' द्रव्यरत्ने ' तु मेहघ्नो सं-
प्रोक्तो भिषग्वरैः। ६० गोरक्षदुग्धी । म० गोरक्षदुग्धी । गु० गो-
रक्षदुधेली । गोरक्षदुग्धी गोरक्षी नाम्रदुग्धी रसायनी ॥ ५६ ॥ बहुपत्रा
मृतंजीवी मृतसंजीवनी ' नृपे '। गुणाः। गोरक्षदुग्धी मधुरा वृष्या
संग्राहिका हिमा ॥ ५७ ॥ सर्ववश्यकरी चैव रसे सिद्धिगुणप्रदा। ' नृपे '
' द्रव्ये ' स्तंभिनी च मेहहा संस्मृता बुधैः ॥ ५८ ॥ इति श्रीसिद्धेश्वर-
प्रेरिते राघवविरचिते निघंटशिरोमणे पर्पटादिक्षुद्रक्षुपवर्गः समाप्तः ॥

## ४ पिप्पल्यादिवर्ग.

१ पिप्पली । म० पिंपळी । गु० पीपर, लिंडी पीपर । पिप्पली
कृकरा शौंडी चपला मागधी कणा । कटुबीजा च कोरंगी वैदेही तिक्त-
तंडुला ॥ ५९ ॥ श्यामा दंतफला कृष्णा कोला च मगधोद्भवा । उपणा
चोपकुल्या च तथैव तीक्ष्णतंडुला ॥ ६० ॥ प्रोक्ता ' राजनिघंटे ' तु
वसुभूमिरूपवेति च । गुणाः । पिप्पली ज्वरहा वृष्या स्निग्धोष्णा कटु-
तिक्तका ॥ ६१ ॥ दीपनी वातहा श्वासकासश्लेष्महरा ' नृपे '। वात-
श्लेष्मक्षयहरा प्रोक्ता ' धन्वन्तरौ ' ध्रुवं ॥ ६२ ॥ आर्द्रा गुणे हिमा
गुर्वी स्वाद्वी स्निग्धा कफप्रदा । जीर्णज्वरहरा प्रोक्ता वैद्ये ' भावप्रका-
शके ॥ ६३ ॥ २ गजपिप्पली । म० गजपिंपळी । गु० गजपीपर ।

गजोपणा चव्यफला चव्यजा गजपिप्पली । श्रेयसी क्षुद्रवैदेही दीर्घग्रंथिश्च तैजसी ॥ ६४ ॥ वर्तुलं स्थूलवैदेही प्रोक्ता ' राजनिघंटके ' ' धन्वंतरिनिघंटे ' तु चविका परिकीर्तिता ॥ ६५ ॥ वशिकः सर्वदापुष्पस्तथा मर्कटपिप्पली । करजो पार्वतेयश्च गजकृष्णा तदुत्तर ॥ ६६ ॥ प्रोक्ता ' गणनिघंटे ' तु भिषक्विद्याविशारदैः । गजाव्हा इभकृष्णा च वशिरो हस्तिपिप्पली ॥ ६७ ॥ करिकृष्णा ' कैयदेवे ' कपिवल्ली तु ' भावके ' । राजकृष्णा कोलवल्ली ' द्रव्यरत्ने ' प्रकीर्तिता ॥ ६८ ॥ **गुणाः** । गजोपणा कटूष्णा च रूक्षा मलविशोषणी । बलासघातहर्त्री च स्तन्यवर्णविवर्द्धिनी ॥ ६९ ॥ ' नृपे ' ' कैये ' कटु पाके वीर्योष्णा वातश्लेष्महा । कृमिश्वासातिसारघ्नी दीपनी कंठरोगहा ॥ ७० ॥ **शुष्कापिप्पलीगुणाः** । शुष्का लघुः स्वादुपाका तथैव च रसे कटु । सरा च कामलाहर्त्री कफगुल्मविनाशिनी ॥ ७१ ॥ कष्ठकठरुमा हर्त्री ' मदने ' परिकीर्तिता । मूत्रकृच्छ्राश्मरीहर्त्री तथा विस्फोटनाशिनी ॥ ७२ ॥ योनिशूलप्रहश्चेति प्रोक्ता वैद्ये ' गजे ' ध्रुवं । ' द्रव्यरत्नाकरे ' वैद्यैर्भेदिनी परिकीर्तिता ॥७३॥ वृष्या पाके स्वादुरसा पित्तघ्ना च रसायनी । कासोदरप्रहर्त्री च कुष्ठगुल्मादिनाशिनी ॥ ७४ ॥ आमवातप्रमेहघ्नी शूलहा ' मदने ' स्मृता । ३ **सिंहली पिप्पली** । म० सिंहली पिंपळी । गु० सिंहली पीपर । सैंहली सर्पदंडा च सर्पांगी ब्रह्मभूमिजा ॥ ७५ ॥ पार्वती चौर्ण्जा मूलवब्बाजारुदा द्विजा । सिंहलस्था लवदता ज बाला चैव न वरा ॥ ७६ ॥ कुरवीजीवनेत्रा च प्रोक्ता ' राजनिघंटके ' । सिंहली नीलिका नाडी कुटीसितवारिका ॥ ७७ ॥ ' द्रव्यरत्नाकरे ' चैव भिषग्भिः परिकीर्तिता । **गुणाः** । सैंहली कटुरूष्णा च जतुघ्नी दीपनी परा ॥ ७८ ॥ कफश्वासानिलघ्नी च कोष्ठशोधनिका ' नृपे ' । ' कैये ' शीता रेचनी च वृष्यामानिलनाशिनी ॥ ७९ ॥ ४ **वनपिप्पली** । म० रानपिंपळी । गु० वनपपर । सूक्ष्मा क्षुद्रा वनस्था च पिप्पली ' राजनामके ' । **गुणाः** । वनस्था पिप्पली रुच्या तीक्ष्णोष्णा दीपनी ' नृपे ' ॥ ८० ॥ आर्द्रा मधुरुणाढ्या तु शुष्का स्वल्पगुणा स्मृता । ५ **पिप्पलीमूलं** । म० पिंप

कमूळ। गु० पीपरीमूल। ग्रंथिकं पिप्पलीमूलं मूले तु चटका शिरः ॥ ८१ ॥ कोलमूलं कटुग्रंथी कटूमूलं कटूषण। सर्वग्रंथिस्तु पत्राढ्यं विरूपं शोणसंभव ॥ ८२ ॥ सुग्रंथि ग्रंथिलं चैव संप्रोक्तं 'राजनामके', । 'धन्वंतरिनिघंटे' तु संप्रोक्तं चविकाशिरः ॥ ८३ ॥ कणामूलं मागधं च रूक्षकं मगधाजग्र। षड्ग्रंथिस्तु सुसंप्रोक्ता 'कैयदेवनिघंटके' ॥८४॥ कृष्णामूलं तथा चाग्निग्रंथिकं 'द्रव्यनामके'। शौंडिक चपलामूलं संप्रोक्तं 'मगनामके' ॥८५॥ गुणाः। ततस्तु पिप्पलीमूल कटूष्णं श्लेष्मनाशनं । क्रिमिहृद्दीपनं चैव वातरोगविनाशन ॥ ८६ ॥ रोचनं पित्तलं चैव 'नृपे' प्रोक्तं भिषग्जनैः। श्वासकासापहं 'द्रव्ये' 'मदे' चोदररोगजित् ॥ ८७ ॥ पाचनं च तथा रूक्षं संप्रोक्तं वैद्यनायकैः। आनाहप्लीहगुल्मघ्न क्षयघ्नं 'भावनामके' ॥ ८८ ॥ ६ शुंठी। म० सुंठ। गु० सूंठ। शुंठी महौषध विश्वं नागरं विश्वभेषज। विश्वौषधं कटुग्रंथिः कटुभद्रं कटूषणं ॥ ८९ ॥ सौपर्णं शृंगवेरं च कफारिश्चार्द्रकः स्मृतः । शोषणं नागराव्हं च प्रोक्तं 'राजनिघंटके' ॥ ९० ॥ 'धन्वंतरिनिघंटे' तु आर्द्रिकं परिकीर्तितं । कटूत्कटं 'कैयदेवे' भिषग्भिः परिकीर्तितं ॥ ९१ ॥ महथूसंख्यकं प्रोक्तं भिषग्विद्याविशारदैः । गुणाः। शुंठी वटूष्णा स्निग्धा च कफशोषविनाशिनी ॥ ९२ ॥ वायुशूलमहंत्री च बद्धोदरविनाशिनी। आमाध्मानश्लीपदघ्नी प्रोक्ता 'राजनिघंटके' ॥९३॥ आमवातप्रहंत्री च पाचनी 'मदने' स्मृता। अरोचिघ्नी च हृप्या च वातोदरविनाशिनी॥ ९४ ॥ कासपांडुहरा प्रोक्ता 'धन्वंतरिनिघंटके'। पाके तु मधुरं प्रोक्तं मलमग्राहिकं तथा ॥ ९५ ॥ हृद्यं स्वयं वातकफहृद्रोगार्शोविनाशनं। आमघ्नं पित्तलं 'कैये' हिध्मानाहवमेहरा ॥ ९६ ॥ ७ आर्द्रकं। म० आलें। गु० आदु। आर्द्रकं गुल्ममूलं च मूलजं कंदजं वरं। शृंगवेरं महीजं च सैकतेष्टमनूपजं ॥ ९७ ॥ अपाकशाकमार्द्रिव्यं राहुछत्रं सुशाककं। आर्द्रशाकं तु शार्ङ्गं च सच्छाकं 'राजनामके' ॥ ९८ ॥ कंदरं च महाजंतु 'धन्वंतरिनिघंटके'। ककुद 'कैयदेवे' च भिषग्भिः परिकीर्तितं ॥ ९९ ॥ कंदौषधं 'द्रव्यरत्ने' संप्रोक्तं भिषजावरैः। गुणाः। आर्द्रकं तु

कटूष्णं च हृद्यं पाके च शीतलं ॥१२००॥ दीपन रुचिदं शोफकंठामय-
विनाशनं । कफहं भिषजानाथैः प्रोक्ता ' राजनिघंटके ' ॥ १ ॥ ' द्रव्ये '
सर च 'मदने' भेदनं गुरु संस्मृतं । ८ मरिचं । म० मिरे । गु० मरी ।
मरिचं पलितं श्यामं कोलं पर्द्धोजभूषणं ॥ २ ॥ यवनेष्टं वृत्तफलं शावांग
भ्रमेपत्तनं । कटुक च शिरोवृत्तं वीरं कपिगिरोचनं ॥ ३ ॥ मृष्टं सर्वहितं
कृष्णं प्रोक्तं ' राजनिघंटके ' । ' कैयदेवनिघंटे ' तु तीक्ष्णं च चर्मवंवनं
॥ ४ ॥ ' द्रव्यरत्नाकरे ' चैव श्यामं तु परिकीर्तितं । तथा ' मदनपाले '
तु संप्रोक्तं चटकाशिरः ॥ ५ ॥ चरप्रियं क्रिमिहर धन ' गणनिघंटके ' ।
गुणाः । मरिचं कटुतिक्तोष्णं लघुश्लेष्मानिलघ्नकं ॥ ६ ॥ क्रमिहृद्रोगनिघ्न
च कृमिकृद्राजनामके' । पित्तकृत् ' धन्वके ' प्रोक्तमार्द्रं तु परिकीर्त्यते
॥ ७ ॥ आर्द्रं नात्युष्णमित्युक्तं स्वादु पाके स्वपित्तलं । कफप्रसेकदं चैव
गुरु तत्रैव प्रोच्यते ॥ ८ ॥ शुष्कं स्यात्तु रसे पाके चोष्णं हि लघु दीपनं ।
अवृष्यं श्वासशूलघ्नं शोष्यं तत्रैव कथ्यते ॥९॥ पूयस्रावं च नात्युष्णं 'द्रव्ये'
स्यान्नातिपित्तलं । ९ श्वेतमरिच । म० पांढरीं मिरीं । गु० धोळा मरी ।
सिंधास्य सितमरिच भद्रक सितवल्लिज ॥ १० ॥ धवलं च तथा प्रोक्तं
बाल्कं बहुलं ' नृपे ' । ततस्तु शुभ्रमरिचं दीर्घोर्वीज च शिग्रुक ॥११॥
' धन्वंतरिनिघंटे ' तु भिषग्भिः परिकीर्तितं । गुणाः । संप्रोक्त श्वेतमरिचं
कटूष्ण चोष्णमेव च ॥ १२ ॥ विषघ्नं भूतशमनमवृष्यं दृष्टिरोगहर ।
रसायने च सग्राह्य वैद्येराजनिघंटके ॥१३॥ १० धान्यक । म० धणे ।
गु० धाणा । धान्यक धानकं धान्यं धानय धनिक घना । कुस्तुम्बरश्चा-
छक च छत्रधान्यं वितुन्नक ॥ १४ ॥ सुगंधि. शाकयोग्यश्च सूक्ष्मपत्रो
जनप्रियः । धान्यबीजं बीजधान्यं वेधकं ' राजनामके ' ॥ १५ ॥ वेपणाभा
तु धानिका स्वद्यगधा तु धान्यका । धानी धाना छत्रिधान्यं छत्रा
स्वद्या न वेपगा ॥ १६ ॥ ' कैयदेवनिघंटे ' तु भिषग्भि परिकीर्तितं ।
तथा भावप्रकाशे च कुनटी संस्मृता बुधैः ॥ १७ ॥ गुणाः । धान्यकं
मधुरं शीत कषाय पित्तनाशनं । वामदृद्वार्दकफहं दीपन ज्वरह ' नृपे '
॥ १८ ॥ ' द्रव्ये ' ज्वरातिसारघ्न ' मदने ' मूत्रलं लघु । रक्तार्शोघ्नं तु

'भावे' प्राहि प्रोक्तं भिषग्जनैः ॥ १९ ॥ 'धन्वंतरौ' तु चक्षुष्यं हृद्यं रोचनमित्यपि । पाके स्वादु तथा वृष्यं मूत्रलं च त्रिदोषहृत् ॥ २० ॥ उष्णवीर्यं बद्धविट्कं पाचनं दाहश्वासहृत् । गुदोत्थंशाकृमीन्हन्ति 'कैयदेव-निघंटके' ॥२१॥ ११ यवानी । म० ओंवा । गु० अजमा । यवानी दीप्यको दीप्यो यवसाव्हो यवाग्रजः । दीपनी चोग्रगंधा च वातारिर्भूकदंबका ॥२२॥ यवजो दीपनीयश्च शूलहंत्री यवानिका । उग्रा च तीव्रगंधा च प्रोक्ता । 'राजनिघंटके' ॥२३ ॥ 'कैयदेवनिघंटे तु भूमिकः परिकीर्तितः । 'द्रव्यरत्नाकरे' चैव कारवी कीर्तिता बुधैः ॥ २४ ॥ ततो 'मदनपाले' च स्वनिर्गंधा प्रकीर्तितः । तथा 'भावप्रकाशे' च ब्रह्मगर्भाऽजमोदिका ॥२५ अग्निवर्द्धो यवानश्च हृद्यो 'गणनिघंटके' । ब्रह्मदर्भाव्हयश्चैव 'कोशे' तु परिकीर्तितः ॥ २६ ॥ चतुर्विंशतिसंख्याका संप्रोक्ता भिषजां वरैः । गुणाः । यवानी कटुतिक्तोष्णा वातश्लेष्मशूलहा ॥ २७ ॥ आध्मानक्रिमिछर्दिघ्नी दीपनी 'राजनामके' । आमवातहरा चैव सरेति 'द्रव्यनामके'॥२८॥ रोचनी पाचनी हृद्या लघ्वी कफविनाशिनी । शुक्रनिलोदरानाहगुल्मघ्नी पित्तकोपना ॥ २९ ॥ 'कैयदेवनिघंटे' च संप्रोक्ता भिषजांवरैः । वातश्लेष्महरा गुल्मनाशिनी 'मदने' स्मृता ॥३०॥ हृद्रोगशमनी प्रोक्ता वैद्यै-'र्गणनिघंटके' । १२ चव्य । म० चवक । गु० चवक । चव्यकं चविका चव्यं चविरो गंधनाकुली ॥ ३१ ॥ वल्लीकोलं कोलवल्ली तथा कुटिलमस्तकं तीक्ष्णा करिकणावल्ली इकरी 'राजनामके' ॥ ३२ ॥ नेत्रभूसंख्यकाः प्रोक्ता पुरातनचिकित्सकैः । गुणाः । चव्यं तु कटुकं चोष्णं रोचनं लघु दीपनं ॥ ३३ ॥ जंतुहं कासश्वासघ्नं शूलहं 'राजनामके' । कफवातहरं 'धन्वे' 'द्रव्ये' चार्शोहरं स्मृतं ॥ ३४ ॥ १३ चित्रकः । म० चित्रक । गु० चित्रो । चित्रकोग्निश्च शार्दूलश्चित्रपाली कुटः शिखी । कृशानुर्दहनश्चैव ज्वालो ज्योतिस्तु पालकः ॥ ३५ ॥ अनलो दारुणो वन्हिः पावकः शबलस्तथा । पाठी द्वीपी तु चित्रांगः शूरो 'राजनिघंटके' ॥ ३६ ॥ 'धन्वंतरिनिघंटे' तु पाठीनो वल्लरी हविः । हुताशनोरुणश्चैव ज्योतिष्वो हुतभुक् तथा ॥ ३७ ॥ ज्वलनश्च शठश्चैव प्रोक्तो

'कैयनिघंटके' । ज्वालस्तु दीपसंज्ञा च स्वमलो 'गणनामके' ॥ ३८ ॥ गुणाः । चित्रकोऽग्निसमः पाके कटुः शोफकफापहः । वातोदरार्शोग्रहणीकृमिकंडूहरो 'नृपे' ॥ ३९ ॥ कामरत्न 'मदने' प्रोक्तो पुरातनचिकित्सकैः । वीर्योष्णो दीपनो रुक्षो रोचनश्वासशोफहा ॥ ४० ॥ कुष्ठहा 'कैयदेवे' च कटुत्वात्कफनाशनः । उष्णत्वाद्वातनाशश्च त्रिदोषघ्नोऽग्निदीपनः ॥ ४१ ॥ प्रोक्तः पुरातनैर्वैद्यैस्तिक्तत्वात् पित्तनाशनः । रक्तचित्रक । म० तावडा चित्रक । गु० रातो चित्रक । कालो व्यालः कालमूलो मार्जाररस्त्वतिदीप्यकः ॥ ४२ ॥ दारुकोऽग्निः पावकश्च चित्रांगो रक्तचित्रकः । महांगः स्याद्रुद्रसंख्या 'राजनामनिघंटके' ॥ ४३ ॥ गुणाः । स्थूलकायकरो रुच्यः कुष्ठघ्नो रक्तचित्रकः । रसे नियामको लोहे वेधकश्च रसायनः ॥ ४४ ॥ प्रोक्तो 'राजनिघंटे' तु पुरातनभिषग्वरैः । १५ विडंगः । म० वावडिंग गु० वावडिंग । विडंगा कृमिहा चैव जंतुघ्ना तंडुलीयका ॥ ४५ ॥ वातारि तंडुला चैव जंतुघ्नी मृगगामिनी । केरली गन्धराऽमोघा कपाली चित्रतंडुला ॥ ४६ ॥ वरा सुचित्रबीजा च जंतुहन्त्रीति 'राजके' । मोघा तु केरल चैव तथैव भृंगगामिनी ॥ ४७ ॥ 'धन्वंतरिनिघंटे' तु कथिता वैद्यपांडितैः । कृमिजित् कृमिहन्त्री च वेल्लं कृमिहरं तथा ॥ ४८ ॥ भूसश्च कृमिहा चैव 'कैयदेवनिघंटके' । 'द्रव्यरत्नाकरे' चैव जंतुघ्नं कृष्णतंडुलं ॥ ४९ ॥ तथा 'मदनपाले' तु केराला तंडुलाधिका । क्षुद्रतंडुलसंज्ञा च तथैव जंतुवारणी ॥ ५० तथा 'गणनिघंटे' तु कृमिशत्रुः प्रकीर्तितः । गुणाः । विडंगस्तु कटूष्णश्च लघुर्वातकफान्नुत् ॥ ५१ ॥ अग्निमांद्यारुचिहरो भ्रांतिकृमिविनाशनः । 'द्रव्ये' गुरुमहरः प्रोक्तो 'कैय' विष्टंभहा तथा ॥ ५२ ॥ गणेनाहहरः प्रोक्तो भिषग्भिश्रेष्ठैर्न संशयः । पाके कटुस्तु रुक्षश्च वीर्योष्णोऽश्मानाश: । आमशूलहरः प्रोक्तो 'कैये' विष्टंभहा तथा । मेहोदरविनाशश्च मेदप्रोक्तो भिषग्जनैः ॥ ५४ ॥ १६ वचा । म० वेखंड । गु० वज । उग्रगंधा वचा चैव गोलोमी जटिला तथा । उग्रा तु लोमशा भद्रा मंगल्या विजया तथा ॥ ५५ ॥ रक्षोघ्नीति भिषग्भिस्तु संप्रोक्ता

'राजनामके' । 'केयदेव निघंटे' तु पड्ग्रंथा परिकीर्तिता ॥५६॥ गुणाः । वचा तीक्ष्णा कटूष्णा च कफामग्रंथिशोफनुत् । वातज्वरातिसारघ्नी वान्तिकृत् भूतनाशिनी ॥५७॥ तथोन्मादहरा प्रोक्ता 'राजनामनिघंटके'। १७श्वेतवचा। म० पाढरें वेखंडा।गु० धोळा वज। मेध्या श्वेतवचा चैव पड्ग्रंथादीपपत्रिका ॥ तीक्ष्णगंधा हैमवती मंगल्या विजया तथा । प्रोक्ता 'राजनिघंटे'तु पुरातनचिकित्सकैः ॥ ५८ ॥ श्वेता तु शतपर्वा च वीरयुक्ताऽरुणाऽपरा। शुभा भोगवती लोमा कर्पणी 'केयदेवके' ॥ ६० ॥ पारसीका वचा शुक्ला प्रोक्ता 'भावप्रकाशके'। अग्रसंज्ञस्तु रक्षोघ्नी प्रोक्ता 'गणनिघंटके' ॥ ६१ ॥ एकविंशतिसंख्याका भिषग्भिः परिकीर्तिता । गुणाः । श्वेतवचाति गुणाढ्या मतिमेधायुःसमृद्धिका कफनुत् ॥ ६२ ॥ हृद्या च वातभूतक्रिमिदोषघ्नी च दीपनी च वचा । शुक्रविशोधिनी प्रोक्ता 'भावे' मूत्रविशोधिनी ॥ ६३॥ वातश्लेष्महरं कंठ्यं मेध्यं क्रिमिविबंधहृत् । शूलाध्मानहरं प्रोक्तं 'धन्वंतरिनिघंटके' ॥ ६४ ॥ कटु पाके दीपनी च जीवनी स्वरदा ध्रुवं । रक्षोपस्मारजंतुघ्नी 'केयदेवे' स्मृता ध्रुवं ॥ ६५ ॥ १८ कुलंजन म० कोळिंजन । गु० कुलिंजन कुलंजो गंधमूलश्च तीक्ष्णमूलः कुलंजनः । प्रोक्ता 'राजनिघंटे' तु वैद्यविद्याविशारदैः ॥ ६६ ॥ 'द्रव्यरत्नाकरे', चैव गंधबीजः प्रकीर्तितः । उग्रगंधा सुगंधा च महामरवचा तथा ॥ प्रोक्ता 'भावप्रकाशे' च वसुसंख्या भिषग्वरैः । गुणाः । कुलंजः कटुतिक्तोष्णो दीपनो मुखदोषनुत् । ॥ ६८ ॥ 'नृपे' 'द्रव्यनिघंटे' च कफवातहरः स्मृतः । सुस्वरत्वकारी रुच्या हृत्कंठमुखशोधिनी ॥ ६९ ॥ 'भावप्रकाशे' संप्रोक्ता पुरातनभिषग्जनैः । १९ जीरक । म० । जिरें । गु० जीरूं । जीरको जरणो जीरो जीर्णो दीप्यश्च दीपकः ॥ ७० ॥ अजाजिको वन्हिसखो मागधो 'राजनामके' । दीर्घनं चैव हृद्यं च मनोज्ञं वरगं तथा ॥ ७१॥ पूज्यमानं तु पीताभं रुच्य 'धन्वंतरौ' स्मृतं । रससंख्यका प्रोक्ता पुरातनचिकित्सकैः॥७२॥ गुणाः। जीरकः कटुरुष्णश्च वातहृद्दीपनः परं। गुल्माध्मानातिसारघ्नो ग्रहणीक्रिमिहृ 'न्नृपे'॥७३॥ क्षयहा 'द्रव्यरत्ने' च

।'मदने' तु ग्रलासहा ।'रूक्षो रुच्यश्च सग्राही चक्षुष्य पित्तहस्तथा॥७४॥ गर्भाशयविशोधश्च मेध्यो ।हृद्यश्च पाचनः । छर्दिवातकफघ्नश्च प्रोक्तो किंयनिघंटके॥ ७५ ॥ बल्यो वृष्य कफघ्नश्च ज्वरघ्ने 'भावनामके' । २० श्वेतजीरक । म० पांढरा जिरें।। गु० घोळू जीरू । गौरादिजीरका जाजी।श्वेतजीरक एव च॥।७६ ॥ कणाव्हा कणजीर्णा च कणा दीप्य सितादिक. । सिताजाजी दीर्घकणा प्रोक्ता 'राजनिघटके' ॥ ७७ ॥ शुक्लाजाजी दीर्घकस्याच्चथा।च कणजीरक । दीर्घजीरस्तथा प्रोक्तो 'धन्वंतरिनिघंन्के ॥७८॥ गुणा । गौराजाजी हिमा रुच्या कटुर्मधुरदीपनी । कृमिघ्नी विषहन्त्री च चक्षुष्याध्माननाशिनी ॥ ७९ ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यविद्याविशारदे । २१ कृष्णजीरक । म० शहाजिरें । गु० शाजीर ।।कृष्णा तु जरणा काली बहुगधा च भेदिनी ॥ ८० ॥ पटु भेदनिरा रुच्या नीला नीलकणा तथा । काश्मीरजीरका पर्पराली स्या ह्रांतिशोधिनी ॥ ८१'॥ काश्मीरी सुगधा च प्रोक्ता 'राजनिघंटे'।

गु० कडु जीरे । बृहत्पाली, सूक्ष्मपत्रारण्यजीरःकणा तथा ॥ ९१ ॥ वनजीरकसंज्ञश्च संप्रोक्ता ' राजनामके ' । ' धन्वंतरिनिघंटे तु वन्यजीरके एव, च ॥ ९२ ॥ गुणाः । वनजीरः कटुः शीतो व्रणहा ' राजनामके ' । ' द्रव्यरत्नाकरे ' प्रोक्तो स्तंभी वातकफापहो ॥ ९३ ॥ २४ मेथिका । म० मेथी । गु० मेथी । मेथिका मेथिनी मेथी दीपनी बहुपत्रिका ॥ बोधिनी गंधबीजा चा ज्योतिर्गंधफला तथा ॥ ९४ ॥ वल्लरी चंद्रिका मंथा मिश्रपुष्पा च कैरवी । कुंचिका बहुपर्णाचे पीतबीजेति ' राजके ' ॥९५॥ गुणाः ॥ मेथी तु कटुका प्रोक्ता रक्तपित्तप्रकोपिनी । कफारुचिप्रहंत्री च दीपनी वातहृत् ' नृपे ' ॥ ९६ ॥ दाहच्छर्दिश्लेष्मकासवातरक्तहरा ' द्रवे ' । वातश्लेष्मज्वरघ्नीति प्रोक्ता ' मदनपालके ' ॥ ९७ ॥ २५ हिंगुपत्री । म० बाफळी । गु० बाफळी । पृथ्वीका हिंगुपत्री च कवरी दीर्घिका पृथुः । दारुपत्री तु बिल्वीच बाप्पी तन्वीति ' राजके ' ॥९८॥ ' धन्वंतरीनिघंटे ' तु पृथुला बाष्पिका स्मृता । ' कैयदेवनिघंटे ' तु तंद्री च दीर्घपत्रिका ॥ ९९ ॥ ' मदने ' कारवी तंत्री बिल्वीका चारुपत्रिका ॥१३००॥ गुणाः । हिंगुपत्री कटुस्तीक्ष्णा तिक्तोष्णा कफवातहृत् ॥ १ ॥ आमक्रिमिहरा रुच्या दीपनी पाचनी ' नृपे ' । वातगुल्महरा प्रोक्ता ' मदने ' वैद्यनायकैः ॥ २ ॥ ष्ठीहबंधार्शोगुल्मघ्नी हृद्वस्तिशूलहृत् ' धने ' । ' मदे ' श्लेष्महरा ' कैये ' ' द्रव्ये ' प्लीहाहरा स्मृता ॥ ॥ ३ ॥ २६ हिंगु । म० गु० हिंग । उग्रगंधस्तु हिंगुश्च भूतारिर्बाल्हिकं तथा । उग्रवीर्यं च सूपागं रसोघ्नं जंतुनाशनं ॥ ४ ॥ अगूढगंध जरणं भेदनं रामठं तथा । दीप्तं सहस्रवेधं च सूपधूपनमेव च ॥ ५ ॥ प्रोक्तं ' राजनिघंटे ' तु पुरातनभिषग्वरैः । तथाप्युग्रं च जंतुघ्नं शूलनाशनमेव च ॥ ६ ॥ ' धन्वंतरीनिघंटे ' च जरकं ' कैयदेवके ' ॥ नवसूसंख्यका प्रोक्ता भिषग्विद्याविशारदैः ॥ ७ ॥ गुणाः ॥ हिंगु हृद्यं कटूष्णं च क्रिमिवातकफापहं । विबंधाध्मानशूलघ्न चक्षुष्यं गुल्महृत् ' नृपे ' ॥ ८ ॥ सरं हृद्रोगहत्प्रोक्तं ' धन्वंतरिनिघंटके ' । रक्तपित्तकरं श्वासकासोदर-विनाशनं ॥ ९ ॥ आनाहाजीर्णहच्चैव प्रोक्तं ' कैयनिघंटके ' । पित्तवर्धन-

घृताची गर्भसंभवा । कांतिदायी दिव्यगंधा भद्रैला ' राजनामके ' ॥२८॥ त्रिदिवा त्रिदिवोद्भूता पृथ्वीका रुक्सुगंधिका । ' धन्वंतरिनिघंटे ' तु प्रोक्ता वैद्यविचक्षणैः ॥ २९ ॥ ' कैयदेवे ' तु पत्रैला कन्यका चंद्रला पुत्रा । निष्कुटी चंद्रवालैला बहुला ' रत्नमरे ' स्मृता ॥ ३० ॥ ३१ एला । म० बारीक वेलदोडे । गु० एलची कागदी । एला बहुलगंधैंद्री द्राविडी निष्कुटिस्त्रुटिः । कपोतवर्णी गौरांगी बाला बलवती हिमा ॥ ३१ ॥ उपकुंची चंद्रिका च सूक्ष्मा सागरगामिनी । गर्भारिगंधफलिका कायस्था ' राजनामके ' ॥ ३३ ॥ सूक्ष्मैला बहुला चद्रा कौरंगी तुत्थनामका । ' धन्वंतरिनिघंटे ' तु प्रोक्ता वैद्यविचक्षणैः ॥३४॥ निस्त्रुटी तु द्विपा चैव सुदैला चंद्रसंभवा । तथा चंद्रलता प्रोक्ता ' कैयदेवनिघंटके ' ॥ ३५ ॥ ' द्रव्यरत्नाकरे ' चैव संप्रोक्ता द्राविडोद्भवा । चंद्रवाला निष्कुटी च कोरंगी ' मदने ' स्मृता ॥ ३६ ॥ तुत्था ' मावप्रकाशे ' च भिषग्भिः कथिता ध्रुवं । त्रिपुटी चंद्रभागा च प्रोक्ता ' गणनिघंटके ' ॥३७॥ त्रिपुटाऽ'मरकोशे' तु वैद्यविद्याविशारदैः॥ गुणाः। एलाद्वयं शीतलं च तिक्तं पित्तकफापहं ॥ ३८ ॥ हृद्रोगमलपीडाघ्नं पुंस्त्वघ्नं ' राजनामके ' अश्मरीनाशिनी प्रोक्ता ' द्रव्यरत्नाकरे ' ध्रुवं ॥ ३९ ॥ बस्तिप्रणाशिनी प्रोक्ता वैद्यै ' मदनपालके ' । पित्तप्रकोपनी चैव ' गणे ' गर्भविनाशिनी ॥ ४० ॥ कफवातविषापघ्नी त्रगबस्तिरुजाहरा । मुखकंठविशोधी च तथा मस्तकशोधनी ॥ ४१ ॥ 'धन्वंतरिनिघंटे' च संप्रोक्ता भिषग्वरैः । मूत्रकृच्छ्रार्शहंत्री च श्वासकासकफापहा ॥ ४२ ॥ पित्तास्रिक्रुद्रोचना च कफपित्तविनाशिनी । रूक्षा हृल्लासतृट्कंडूनाशिनी वामनी ' कैये ' ॥ ४३ ॥ ३२ सैंधव । म० शेंदेलोण । गु० सिंधालूण । सैंधवं स्याच्छीतशिवं नादेयं सिंधुजं शिवं । शुद्धं शिवात्मजं पथ्यं माणिमंथं तु ' राजके ' ॥ ४४ ॥ सिंधुत्थं स्वादु शीतं च मणिमंथं च ' धन्वके ' । सिंधु स्याद्विमलं चैव लवणं तु शिलात्मकं ॥४५॥ पटूत्तमं शीतशिवं तु वरं स्यात् शुभ्रनामकं । ' कैयदेवनिघंटे ' तु समोक्तं वैद्यनायकैः ॥ ४६ ॥ गुणाः । सैंधवं तु भवेद्वृष्यं

मुपाक्य च धूर्त खंडाख्यमेवं च । कृत्रिमं लवणं प्रोक्तं ' राजनामनिघंटके ' ॥ ६५ ॥ विडगं कृत्रिमं क्षारं द्राविणं तिक्तमेव च । ' धन्वंतरिनिघंटे ' तु प्रोक्तं वैद्यविचक्षणैः ॥ ६६ ॥ विडूगंधं पाक्यसंज्ञं च धंटिकालवणं तथा । द्राविडं ' कैयदेवे ' तु संप्रोक्त भिषजांवरैः ॥६७॥ ततस्तु बीडलवणमुष्णं दीपनमेव च । रुच्यं ह्यजीर्णशूलघ्नं गुल्ममेहहरं ' नृपे ' ॥ ६८ ॥ ' गणे ' गौरवहृत्प्रोक्तं पुरातनचिकित्सकैः । हृद्रोगकफहृत्तीक्ष्णं ' धन्वे ' वातानुलोमनं ॥ ६९ ॥ ऊर्ध्वाधःकफवातानुलोमनं तथा ॥७०॥ विष्टंभहृद्रोरूक्षमेव च । लघु व्यवायि संप्रोक्तं विबंधानाहहृत्तथा ॥७०॥ विष्टंभहृद्रोरूक्षमेव च । लघु व्यवायि संप्रोक्तं भिषग्वरैः । ३६ सांभर । म० सांभरलोण, गडलोण । गु० वडागरु मीठुं । गाढादिलवणं शुचं पृथ्वीजं गडदेशजं ॥ ७१ ॥ गडोत्थं च महारमं सांभरं संभरोद्भवम् । प्रोक्तं ' राजनिघंटे ' तु पुरातनभिषग्वरैः ॥ ७२ ॥ शाकंभरीयं गंडाख्यं रोमक ' भावनामके ' । प्रोक्तं द्वादशसंख्याकं भिषग्विद्याविशारदैः ॥ ७३ ॥ गुणाः । गाढादिलवणं सूक्ष्मभेदमम्लमलापहं । दीपनं कफवातघ्नमर्शकोष्ठविशोधनं ॥ ७४ ॥ ' राजनामनिघंटे ' च संप्रोक्त वैद्यनायकैः । ३७ समुद्रलवण । म० मीठ । गु० मीठुं । सामुद्रक तु सामुद्रं समुद्रलवणं शिव ॥ ७५ ॥ वंशिरं सागरोत्थं च त्वक्षिवं लवणाब्धिजं । प्रोक्तं ' राजनिघंटे ' तु वैद्यविद्याविशारदैः ॥ ७६ ॥ सागरजं तु वाक्षीवं स्यात्क्षारोदधिसंभवम् । ' धन्वंतरिनिघंटे ' तु लवणं परिकीर्तितं ॥ ७७ ॥ तत. सागरकं चैव त्रिकूटोदधिजातकं । वारिसंभवसंज्ञं च ' कैयदेवनिघंटके ' ॥ ७८ ॥ आसुरं वारिसंभूतं प्रोक्तं ' मदनपालके ' । गुणाः । सामुद्रं लघु हृद्यंच पलितास्रदपित्तदं ॥ ७९ ॥ विदाहि कफवातघ्नं दीपनं रुचिदं ' नृपे ' । ' कैये ' पाके तु मधुरं वातघ्नं श्लेष्मलं तथा ॥ ८० ॥ ' भावप्रकाशे ' संप्रोक्तं गुरु नात्यतशीतलं । पाके नात्युष्णमिरयुक्तं भेदनं ह्यविदाहि च ॥ ८१ ॥ स्निग्धं शूलहरं चैव ' धन्वे ' स्यान्नातिपित्तलं । कफवातहरं द्रव्ये ' ' मदने ' वातकृत्तथा ॥ ८२ ॥ ३८ द्रोणेय । म. द्रोणीचें मीठ । गु. द्रोणी मीठुं । द्रोणेयं द्रोणिजं द्रोणं त्रिकूटलवणं तथा।

मके ' । कचोरः स्थूलकंदश्च सटी गंधरतु ' द्रव्यके ' ॥ २१ ॥ तथा ' मदनपाले ' तु शटी प्रोक्ता भिषग्वरैः । तथा ' स्वमरकोशे ' तु कालपो षेघमुल्यकः ॥ २२ ॥ तथा च दुर्लभः प्रोक्तो ' गणनामनिघंटके ' । गुणाः ॥ कर्चूरः कटुतिक्तोष्णः कफकासविनाशनः ॥ २३ ॥ मुखवैशद्यजननो गलगंडादिहा ' नृपे ' । त्रिदोषमुखरोगघ्नो ज्वरहा ' द्रव्यनामके ' ॥ २४ ॥ लघुः श्वासहरः प्रोक्तो वैद्ये ' भावप्रकाशके ' । रुच्यो वातबलासघ्नो दीपनः श्लीहगुल्महा ॥ २५ ॥ अर्शःक्लेशहरः प्रोक्तो ' धन्वनामनिघंटके ' । ' मदे ' च कुष्ठव्रणहा वातगुल्महरस्तथा ॥ २६ ॥ कफक्रमिहरः प्रोक्तो ' गणनामनिघंटके ' । ४९ पाठा । म० पहाडमूळ्या गु० पाड, काळी पाठ । पाठांऽबष्टांऽवष्टिका च प्राचीना पापचेलिका । २७ ॥ पाठिका स्थापनी चैव श्रेयसी वृन्दकर्णिका । एकाष्ठीला कुचैली च दीपनी वरतिक्तका ॥ २८ ॥ तिक्तपुष्पा बृहत्तिक्ता दीपनी त्रिशिरा वृकी । वृत्तपर्णी वरा देवी मालवी ' राजनामके ' ॥ २९ ॥ त्रिवृच्चैव शुभा प्रोक्ता ' धन्वंतरिनिघंटके । वृकदंती रसा यूथा एकैषी विद्धकर्णिका ३० ॥ तथा च तपनी चैव प्रोक्ता केयनिघंटके । तथा ' गणनिघंटे ' तु प्रोक्तातीसारनाशनी ३१ गुणाः । पाठा तिक्ता गुरूष्णा च वातपित्तज्वरापहा । पित्तदाहातिसारघ्नी भग्नसंधानकृत् ' नृपे ' ॥ ३२ ॥ ' द्रव्ये ' जीर्णहरा प्रोक्ता ' मदे ' गुल्मोदरघ्निका । ' भावे ' तु गरहा प्रोक्ता शूलघ्नी ' धन्वनामके ' ॥ ३३ ॥ कुष्ठच्छर्दिगुल्मकंडुविषहृद्रोगनाशिनी । व्रणशूलश्वासहंत्री क्रमिघ्ना ग्राहि वातला ॥ ३४ ॥ पित्तहृत् कफरक्तघ्नी प्रोक्ता ' केयनिघंटके ' । ४६ वृक्षाम्लं । म० अमसोल, कोकम । गु० कोकम । वृक्षाम्लमम्लशाकस्याच्चुक्राम्लं तितिडीफलं । शाकाम्लमम्लपूरं च पूराम्लं रक्तपूरकं ॥ ३५ ॥ चूडाम्लं चैव बीजाम्लं कफाम्लकमतः परं । रसाम्लं वृक्षाम्लफलं श्रेष्ठाम्लं तदनंतरं ॥ ३६ ॥ अत्यम्लमम्लबीजं च फलचुक्रं च ' रामके ' । तिंतिडीकं चाम्लवृक्षस्तथा चाम्लमहीरुहः ॥ ३७ ॥ ' धन्वंतरिनिघंटे ' तु प्रोक्तं वैद्यविचक्षणैः । अम्लपादपसंज्ञश्च ' द्रव्यरत्नाकरे ' स्मृतः ॥ ९० ॥ प्रोक्तं ' गणनिघंटे ' तु रक्तपूरकनामकं । गुणाः । वृक्षाम्लमम्लं कटुकं कषायं सोष्णं कफार्शोघ्न-

महापर्मरिका तथा । मांगल्यवाछिका चैव तत 'स्वमरकोशके' ॥ ७२ हंजिका फंजिका चैव ब्राह्मणी वर्धकस्तथा । पाष्टेयशाकं संप्रोक्तं वैद्यविशारदैः ॥ ७३ ॥ गुणाः । भार्गी कटुस्तिक्तोष्णा कासश्वासविनाशनी । शोफनगुल्मघ्नी च दाहज्वरहरा 'नृपे' ॥७४॥ द्रव्ये समीरजित् प्रोक्ता 'भावे' स्याद्रक्तगुल्महृत् । वातज्वरमहंत्री च 'गणे' हिक्काविनाशनी ॥ ७५ ॥ गुल्मज्वरामकृद्वातघ्नी यक्ष्मपीनसहृत् 'धन्वे' । कषाया चैव संप्रोक्ता लघु दीपनपाचनी ॥ ७६॥ रूक्षा शोफहरा चैव कफवातरुचिघ्निका । गुल्मार्शोयक्ष्महृत् प्रोक्ता 'केयदेवनिघंटके' ॥ ७७ ॥ ९५ पुष्करमूलं । म० पुष्करमूल । गु० पोखरमूल । मूलं पुष्करमूलं च पुष्करं पद्मपत्रकं ॥ पद्मं पुष्करजं बीजं पौष्करं पुष्कराव्हयम् ॥१९००॥काश्मीरं ब्रह्मतीर्थं च कासारिर्मूलपुष्करं । तथैव पुष्करजटा 'पुष्कराद्या शिफा तथा ॥ १९०१॥ प्रोक्तं 'राजनिघंटे' तु वैद्यशास्त्रस्य पंडितैः । निरलनं तथा वीरं चिरं श्वासारिरेव च ॥ ८० ॥ पद्मतीर्थं वृक्षरुहं तथा पुष्करसागरं । तथा शूलहरं चैव समूलं सुखसंभवं ॥ ८१ ॥ स्थलपद्मिनीकंदश्च 'धन्वंतरिनिघंटके' । पद्मवर्णं तु वाव्हाव्हं पुण्यसागरमेव च ॥ ८२ ॥ पुष्करांघ्रिर्मूलवीरं तथैव च सुगंधिकं । 'केयदेवनिघंटे' तु संप्रोक्तं विपजांवरै ॥ ८३ ॥ गुणाः । अथ पुष्करमूलं तु कटूष्णं तिक्तमेव च। कफवातज्वरघ्नं च श्वासारोचककासहं ॥ ८४ ॥ शोफपांडुहरं चैव प्रोक्तं 'राजनिघंटके' । 'गणे' शूलहरं प्रोक्तं वैद्यविद्याविशारदैः ॥ ८५ ॥ 'धन्वे' हिक्कापहं चैव शोफाध्मानविनाशनं । हिध्मापहं भेदनं च पार्श्वशूलहरं 'कये' ॥ ८६ ॥ 'भावे' शोथहरं प्रोक्तं भिषग्भिःशास्त्रवेतृभिः । ९६ शृंगी । म० कांकडशिंगी । गु० काकडाशींगी । शृंगी कुलीरशृंगी च घोषा तु वनमूर्धजा ॥ ८७ ॥ चंद्रा कर्कटशृंगी च महाघोषा च शृंगिका कालिंगा चंदुखंडा च तथा वनजमूर्धजा ॥ १९१० ॥ कुलीरा च तथा प्रोक्ता 'धन्वंतरिनिघंटके' । कर्कटाख्या कर्कटकी कुलीरो 'केयदेवके' ॥ ९० ॥ तथा 'मदनपाले' तु शृंगनाम्नीति कथ्यते । 'भावप्रकाशे' संप्रोक्ता स्यात्कुलीरविषाणिका ॥ १९१२ ॥

अजशृंगीति कविभिर्भिषक्शास्त्रविशारदैः । तथा 'गणनिघंटे' तु संप्रोक्ता चार्षघंपिका ॥ ९२ ॥ गुणाः । अथ कर्कटशृंगी तु तिक्ता चैव गुरूष्णदा । वातहिक्कातिसारघ्नी कासश्वासहरा तथा ॥ ९३ ॥ पित्तास्रहंत्री संप्रोक्ता वैद्यै 'राजनिघंटके'। 'भावे' तृट्नाशिनी प्रोक्ता पुरातनविकित्सकैः ॥ ९४ ॥ हिघ्मोर्ध्ववातहा प्रोक्ता 'धन्वनामनिघंटके'।क्षयारुचिज्वरघ्नीति वमिहंत्रीति 'कैयके' ॥९६॥ कार्श्यहंत्रीति 'मदने' भिषग्भिः परिकीर्तिता। ८७ लघुदंती। म० दांति। गु० दांती। दंती शीघ्रा श्येनघंटानागस्फोटा निकुंभिनी॥९६॥ दंतिनी तूपचित्रा च भद्रा रूक्षा च रोचनी। चानुकूला निःशल्या च वक्रदन्ता तथैव च ॥ ९७ ॥ मधुपुष्पा विशल्या च तरुण्यैरंडपत्रिका । तथैरंडफला चैव उदुंबरदला तथा ॥ ९८ ॥ कुंभी विशोधिनी चैव तथास्याद्नुरेवती । प्रोक्ता 'राजनिघंटे' तु भिषग्भिः शास्त्रपारगैः ॥ ९९ ॥ 'धन्वंतरिनिघंटे' तु घुणप्रिया मकूलकः । निकुंभा चित्रकूला च तथा स्यादुपचित्रका ॥१६२१॥ द्राक्षायनी शामला च तथा मदनकूलका । आस्या द्रवंती शबरी फंजी न्यग्रोधका स्मृता ॥ १ ॥ प्रत्यक्श्रेणी सुतश्रेणी तथा मूषिकसंभवा । वृषैरंडाखुकर्णी च जयैरंडफला तथा ॥ २ ॥ उदुंबरच्छदा चैव विजया 'कैयदेवके' । नागदंत्याखुपर्णी च प्रोक्ता 'मदनपालके' ॥ ३ ॥ वाराहाम्यनुकूला च प्रोक्ता 'भावप्रकाशके' । मुकूलिका तथा कूला चित्रकेशा 'गणे' स्मृता ॥ ४ ॥गुणाः॥ दंती कटूष्णा विख्याता ह्यामशूलविनाशनी । स्वर्दोषहृत् भिषक्श्रेष्ठैः प्रोक्ता 'राजनिघंटके' ५ ॥ रसे तिक्तोष्णका चैव कफोदरविनाशिनी। वातोदरार्शहंत्री च व्रणघ्नी दीपनी 'वने' ॥ ६ ॥ कफवातार्शगुल्मघ्नी क्षयहृत् 'द्रव्यनामके' । रक्तघ्नी कुष्ठकंडुघ्नी कफोदरविनाशिनी ॥ ७॥ दाहहंत्रीति कविभिः प्रोक्ता 'भावप्रकाशके' । ९८ बृहद्दंतिका । म. थोर दांती, मोगली एरंड । गु. रतनजोत । अन्या दंती केशरुहा विषमद्रा भयावहा ॥ ८ ॥ आवर्तकी चरांगी च जयाव्हा भद्रदंतिका । भिषक्भद्रा तथा प्रोक्ता 'राजनामनिघंटके' ॥ ९ ॥ 'धन्वंतरिनिघंटे' तु बरणी विषभद्रिका । 'कैयदेवनिघंटे' तु धारणा वृषभध्वजा ॥ ११ ॥ प्रोक्ता

'राजनिघंटे' तु भिषक्शास्त्रज्ञपंडितैः। शुक्लभंडी त्रिभंडी स्यात्काकाक्षी
'धन्वन्तरिनिघंटे' तु प्रोक्ता वैद्यविशारदैः॥ ९१॥ कोटरस्थारुणा कुंभः
समीक्ष्य त्रिवृत् ॥ ९० ॥ सर्वानुभूतिस्त्रिपुटा व्यस्ता कोटरवासिनी। 'ध-
समोक्ता 'केयदेवके'। सिता त्रिभंडिका कुंभी 'द्रव्यरत्नाकरे' स्मृता
॥ ९२॥ सर्वानुभूतिस्त्रिवृता भंडी कूटरवाहिनी। प्रोक्ता 'मदनपाले' तु
पुरातनचिकित्सकैः॥ ९३॥ निशोता रेचनी चैव त्रिवृत्ता 'भावनामके'
॥ रसायनी कुंभपुटा त्रिवेला तदनंतरं॥ ९४॥ तथा कोशफला प्रोक्ता
'गणनामनिघंटके'। गुणाः। रक्ता त्रिवृद्रसे तिक्ता कटूष्णा रेचनी
तथा॥ ९५॥ ग्रहणी मलविष्टंभहारिणी 'नृपनामके'। श्यामा हीन-
गुणा चैव कंठकर्षणदायका॥९६॥ मोहमूर्छादाहहारी भ्रमहृ 'त्केयदे-
वके'। ६२ त्वच। म० दालचिनी। गु० तज। त्वचं त्वग्वल्कलं भृंगं
वरांगं मुखशोधनं ॥ ९७॥ शकलं सैंहलं वन्यं सुरसं रामवल्लभं।
उत्कटं बहुगंधं च विज्जुलं च वनप्रियं ॥ ९८॥ लाटपर्णं गंधवल्कं
वरं शीतं तथा 'नृपे'। मुखशोध्यं प्रियं चैव 'धन्वंतरिनिघंटके'॥
९९॥ गुडत्वचं तु हृद्यं च तनुकं स्वर्णभूमिका। लटपर्णं तथा चोचं
तथैव घनसंज्ञकं॥ ६०॥ रामाप्रियं 'केयदेवे' प्रोक्तं वैद्यविशारदैः।
मनःप्रियं तथा 'द्रव्ये' गुरुत्वक् स्वर्णभूमिकं॥ ६१॥ प्रोक्तं 'मदन-
पाले' तु स्वाद्वी दारुसिता तथा। तनुत्वक् च तथा प्रोक्तं 'भावनामनिघंटके'
॥ ६२॥ गुणाः। त्वचं तु कटुकं शीतं कफकासविनाशनं। शुक्राम-
शमनं चैव कंठशुद्धिकरं 'नृपे'॥ ६३॥ हृद्वस्तिरोगवातार्शः पीनसकृ-
मिशुक्रनुत्। विषघ्नं च तथा प्रोक्तं वैद्यैर्मदनपालके॥ ६४॥ 'भावे'
स्वरुचिकृद्दृघ्नं वैद्यैः प्रोक्तं पुरातनैः। लघूष्णं कफवातघ्नं विषशीर्षरुजां हरं
॥ ६५॥ बस्तिशोधनमित्येतत् प्रोक्तं 'धन्वनिघंटके'। तिक्तं स्वादूष्ण
मधुरं रुक्षं पित्तलमेव च॥ ६६॥ हृद्रोगबस्तिशमनं दुर्नामहरणं तथा।
आमवातहरं चैव शुक्रहृत् 'केयदेवके'॥ ६७॥ ६३ तमालपत्र।
म० गु० तमालपत्र। पत्रं तमालपत्रं च पत्रकं छदनं दलं। पलाशमंशुकं
वासस्तापकं सुकुमारकं॥ ६८॥ वस्त्रं तमालकं रामं गोपनं वसनं तथा।

तमालं सुरभिगंधं प्रोक्तं ' राजनिघंटके ' ॥ ६९ ॥ तथा तापसजं प्रोक्तं ' धन्वंतरिनिघंटके ' । तामसं रोमशं रोमं पंचकं ' कैयदेवके ' ॥ ७० ॥ शुकच्छदं ' द्रव्यरत्ने ' भिषग्भिः परिकीर्तितं । गोमेदं तु छदं चैव प्रोक्तं ' मदनपालके ' ॥ ७१ ॥ कालस्कंधस्तमालश्च तापिच्छा ' भरकोशके ' । गुणाः । पत्रकं लघु तिक्तोष्णं कफवातविषापहं ॥ ७२ ॥ बस्तिकडूतिदोषघ्नं मुखमस्तकशोधनं । ' राजनामनिघंटे ' च संप्रोक्तं भिषजां वरैः ॥ ७३ ॥ हृल्लासारोचकार्शोघ्नं ' धन्वंतरिनिघंटके ' । ' कैये ' तु भिषजां नाथैः संप्रोक्तं लघुपिच्छलं ॥ ७४ ॥ स्वर्यः श्लेष्महरं हृद्यं कफपित्तसंयापहं । ६४ नागकेशर । म० नागकेशर । गु० नागकेसर । किंजल्कं कनकाव्हं च केसरं नागकेसरं ॥ ७५ ॥ चांपेयं नागकिंजल्कं नागीयं

शिशिरं दाहपित्तहं। क्षयकासकफश्वासरक्तदोषहरं 'नृपे' ॥ ८९ ॥ बल्या वृष्या च बृंहणी कृच्छ्राश्मरीमेहनघ्न 'द्रव्यरत्नाकरे' स्मृतं। रक्तपित्तारुचिघ्निका ॥ ९० ॥ ज्वरकुष्ठहरा चैव कामलापांडुतृष्णहा। 'केयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ९१ ॥ ६६ तालीसपत्र। म० गु० तालीसपत्र। तालीसपत्रं तालीसं पत्राख्यं च शुकोदरं। धात्रीपत्र चार्कवेधं करिपत्रं घनच्छदं ॥ ९२ ॥ नीलं नीलाम्बरं तालं तालीपत्र तलाव्हय। तालीसपत्रकं चैव 'राजनामानिघंटके' ॥ ९३ ॥ तथा चामलकीपत्र तद्वत्तालीसकं तथा। तमालकीपत्रसंज्ञं तथा तमालकीच्छदं ॥ ९४ ॥ शुकोदरं च पत्राख्यं प्रोक्तं 'धन्वंतरौ' ध्रुवं। धात्रीपत्रं कंदपत्रं तुलसीपत्रसंज्ञकं ॥ ९५ ॥ पत्रं तु 'केयदेवे' च 'मदने' तुलसीच्छदं। पत्राव्हं ग्रंथिकापत्रं संप्रोक्तं वैद्यनायकैः ॥ ९६ ॥ गुणाः। तालीसपत्रं तिक्तं स्यादुष्णं मधुरमेव च। कफवातहरं कासहिक्काक्षयविनाशनं ॥९७॥ श्वासछर्दिहरं प्रोक्तं वैद्ये 'राजनिघंटके'। 'मदने' कृमिहृत्प्रोक्तं पुरातनचिकित्सकैः ॥ ९८ ॥ दीपनं श्लेष्मपित्तघ्नं मुखरोगहरं ध्रुवं। हृद्यं 'धन्वनिघंटे' च संप्रोक्तं वैद्यनायकैः ॥ ९९ ॥ 'केये' स्वरकृद्गुल्मामानग्निमांद्यं च निहन्ति। वैद्ये 'द्रव्यनिघंटे' च स्वर्य प्रोक्तं न संशयः ॥ १६०० ॥ ६७ वंशलोचना। म० गु० वंशलोचन। स्या वंशरोचना वांशी तुंगाक्षीरी तुगा शुभा। त्वक्क्षीरी वंशगा शुभ्रा वंशक्षीरी च वैष्णवी ॥ १ ॥ त्वक्सारा कर्मरी श्वेता वराकर्पूररोचना। तुंगा रोचनिका पिंगा तथैव वंशशर्करा ॥ २ ॥ प्रोक्ता 'राजनिघंटे' तु पुरातनचिकित्सकैः। वंशा तु वंशजा चैव 'धन्वंतरिनिघंटके' ॥ ३ ॥ 'केयदेवे' तु संप्रोक्ता क्षीरिका वंशवर्द्धिनी। गुणाः। स्याद्वंशरोचना रूक्षा कषाया मधुरा हिमा ॥ ४ ॥ रक्तशुद्धिकरी तापपित्तोद्रेकहरा 'नृपे'। तिक्ता च कासकृच्छ्रघ्नी क्षयश्वासहिता तथा ॥ ५ ॥ बल्या च बृंहणी चैव 'धन्वंतरिनिघंटके'। कुष्ठपाण्डुव्रणघ्न च 'माने' प्रोक्तं भिषग्जनैः ॥ ६ ॥ ज्वरघ्नी कामलाघ्नी च वृष्या तृष्णाविनाशनी। रक्तपित्तहरा नैव प्रोक्तं 'मदनपालके' ॥ ७ ॥ ६८ मंजिष्ठा। म०

मंजिष्ठ । गु० मजीठ । मंजिष्ठा हरिणी रक्ता गौरी योजनवल्लिका । समंगा विकसा पद्मा रोहिणी कालमेषिका ॥ ८ ॥ मंडी चित्रलता चित्रा चित्रांगी जननी तथा । मंडूकपर्णी विजया मंजूषा रक्तयष्टिका ॥ ९ ॥ क्षेत्रिणी चैव रागाढ्या भंडीरी कालभंडिका । अरुणा ज्वरहन्त्री च छत्रा नागकुमारिका ॥ १० ॥ भंडीरतिलका चैव रागांगी वस्त्रभूषणा । प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रज्ञपंडितैः ॥ ११ ॥ जिंगी भांडी च कालांगी रक्तांगी मंजुका तथा । काला तु रक्तयष्टी च प्रोक्ता 'धन्वन्तरिनिघंटे' ॥१२॥ लोहिता छत्रका ताम्रा भंडीरा मंजुला तथा। ताम्रवल्ली ताम्रमुखी प्रोक्ता 'कैयनिघंटके' ॥ १३ ॥ मंजुरा पत्रका मंजी 'मदने' ज्वर नाशिनी । भंडीतन्त्री तु भंडारी तथा च वस्त्ररंजिनी ॥ १४ ॥ रमादनी च संप्रोक्ता 'राजनामनिघंटके' । ताम्रमूला कालपेशी रक्तपुष्पी 'गणे'

मज्वरहा 'नृपे' । हिक्काविनाशिनी चैव प्रोक्ता 'भावप्रकाशके' ॥ ४६ ॥ कृमिश्लेष्मव्रणघ्नी च भूतज्वरहरा 'धने' । हिमा त्रिदोषहंत्रीति 'द्रव्यरत्ने' प्रकीर्तिता ॥ ४७ ॥ वर्ण्या बल्या च स्निग्धा च रक्तपित्तव्रणापहा । उरःक्षतविसर्पघ्नी कृमिकुष्ठहरा 'मदे' ॥ ४८ ॥ ७२. अलक्तक । म० गु० अलिता । अलक्तको जंतुरसो रागो निर्भर्त्सनस्तथा । जननी जंतुकारी च संधर्पा चक्रवर्तिनी ॥ ४९ ॥ जतुरसस्तथा चारूवर्तिनी 'धन्वनामके' । 'द्रव्यरत्नाकरे' चैव संप्रोक्ता व्यंगनाशिनी ॥ ५० ॥ गुणाः । अलक्तकस्तु तिक्तोष्णः कफवातहरस्तथा । कंठरोगहरो हृद्यो व्रणदोषहरो 'नृपे' ॥ ५१ ॥ ततो 'मदनपाले' तु संप्रोक्तो व्यंगनाशनः । ७३ लोध्र । म० तांबडा लोध्र । गु० लोहर । लोध्रो रोध्रो भिल्लतरुभिल्लकः कांडकीलकः ॥ ५२ ॥ तिरीटो लोध्रको वृक्षः शंबरो हरितरोध्रकः । तिलकः कांडहीनश्च शाबरो हेमपुष्पकः ॥ ५३ ॥ भिल्ली शाबरकश्चैव प्रोक्तो राजनिघंटके' ॥ शाबरी तिल्वकतरुस्तथा शाबरपादपः ॥ ५४ ॥ तिरीटकस्तथा प्रोक्तो 'धन्वंतरिनिघंटके' । कानीनः पट्टिकभिल्ली 'कैयदे-

शिखी । धातकी वन्हिपुष्पी च ताम्रपुष्पी तु दाहनी ॥ ६४ ॥ अग्नि-
ज्वाला सुभिक्षा च पार्वती बहुपुष्पिका । कुमुदा साधुपुष्पी च कुंजरा
तीव्रवासिनी ॥ ६५ ॥ गुच्छसंघा गुच्छपुष्पा तथैव लोध्रपुष्पिणी । ती-
व्रज्वाला वन्हिशिखा मद्यपुष्पेति 'राजके' ॥ ६६ ॥ धातुकी पार्वतीया च
'धन्वंतरिनिघंटके' । मदनीया पांशुभिक्षा मदनी 'कैयदेवके' ॥६७॥ सीधु-
पुष्पी प्रमदनी स्वधःपुष्पी सुभक्षका। प्रोक्ता 'मदनपाले' तु पुरातनचिकि-
त्सकैः॥६८॥'भावे' प्रोक्ता धातुपुष्पी त्वमरे धृत पुष्पिका। गुणाः । धातकी
कटूष्णा च मदकृद्विषनाशनी ॥ ६९ ॥ प्रवाहिकातिसारघ्नी विसर्पव्रण-
नाशनी । 'नृपे' प्रोक्ता तथा 'द्रव्ये' स्तंभिनी परिकीर्तिता ॥ ७० ॥
गर्भसंस्थापनी चैव रक्तपित्तहरा 'धने' । शीता कषाया तृष्णाघ्नी विसर्प-
हारिणी तथा ॥ ७१ ॥ विषातिसारजंतुघ्नी 'कैये' प्रोक्ता भिषग्जनैः ।
क्रिमिघ्नीति 'गणे' प्रोक्ता पुरातनचिकित्सकैः ॥ ७२ ॥ ७६ समुद्रफल ।
म० समुद्रफल । गु० समुंदरफल । समुद्रनामप्रथमं पश्चात्फलमुदाहरेत् ।
समुद्रफलमित्यादि नाम वाच्यं भिषग्वरैः ॥ ७३ ॥ गुणाः । कटूष्णं समु-
द्रफलं वातभूतत्रिदोषहं । कफभ्रांतिहरं प्रोक्तं 'राजनामनिघंटके' ॥ ७४ ॥
७७ निर्विषा । म० गु० निर्विषी । निर्विषोपविषा चैव विषहा विषहं-
त्रिका । विविषा तु विषभवा ह्यविषा विषवैरिणा ॥ ७५ ॥ प्रोक्ता 'रा-
जनिघंटे' तु सप्तसंख्या भिषग्जनैः गुणाः । निर्विषा कटुशीता च कफवा-
तास्रदोषहा ॥ ७६ ॥ अनेकविषदोषघ्नी व्रणसंरोपिणी 'नृपे' । क्षयशुक्ले-
ष्मरोगघ्नी प्रोक्ता 'भावप्रकाशके' ॥ ७७ ॥ ७८ विष । म० गु०
सामान्य विष । विषमाहेयममृतं गरलं दारदं गरं । कालकूटं हरिद्रं च
रक्तशृंगकमेव च ॥ ७८ ॥ नीलं च गरदं क्ष्वेडो घोरं हालाहलं हरं । मरं
हलाहलं शृंगी भूगरं 'राजनामके' ॥ ७९ ॥ ७९ वत्सनाभ । म०
बचनाग । गु० बछनाग । अमृतं स्याद्वत्सनाभो विषमुग्रं महौषधं । गरलं
मरणं नागं स्तोककं प्राणहारकं ॥ ८० ॥ गरलं स्थावरादि स्यात्प्रोक्तं
'राजनिघंटके' । गरलाख्यं च मधुरं प्रोक्तं वैद्यविशारदैः ॥ ८१ ॥ गुणाः ।
वत्सनाभोऽतिमधुरः सोष्णो वातकफापहः । कंठरुक्सान्निपातघ्नः पित्तसं-

तिः । गुणाः ।-समुद्रफेनं शिशिरं कषायं नेत्ररोगनुत् । ॥ १७००- ॥
कफकंठामयघ्नं च रुचिकृत्कर्णरोगहृत् । ' नृपे ' प्रोक्तं तथा ' धन्वे '
चक्षुष्यं लेखनं हिमं ॥ १ ॥ रक्तपित्तविषघ्नं च गुल्मप्लीहहरं स्मृतं ।
८३। अफेन । म. अफू । गु. अफीण। अफेनं खस-खसरसो निफेनं चाहि-
फेनकं ॥ २ ॥ नागफेनं तथा प्रोक्तं ' राजनामनिघंटके ' । अफूकं च
रसोद्भूतं प्रोक्तं ' मदनपालके ' ॥ ३ ॥ तथा खसफलक्षीरं प्रोक्तं ' भाव-
प्रकाशके ' । गुणाः । अफेनं सन्निपातघ्नं वृष्यं बल्यं च मोहदं ॥ ४ ॥
' नृपे ' प्रोक्तं तथा ग्राहि शोषणं श्लेष्महं ' न्मदे ' । ८४ टंकण । म.
टांकणखार, सवागी । गु. टंकण । टंकणष्टंकणक्षारो रंगक्षारो रसाधिकः ।
॥ ५ ॥ लोहद्रावी रसघ्नश्च सुभगो रंगदस्तथा । वर्तुलं कणकक्षारं मलिनं
धातुवल्लभं ॥ ६ ॥ प्रोक्तं ' राजनिघंटे ' तु भिषक्शास्त्रज्ञपंडितैः । मालती-
रससंभूतो द्रावी द्रावणकस्तथा ॥ ७ ॥ लोहशुद्धिकरश्चैव ' धन्वंतरि-
निघंटके ' । स्वर्णपाकस्तथा प्रोक्तो ' कैयदेवनिघंटके ' ॥ ८ ॥ सौभाग्यं
धातुद्रवकं प्रोक्तं ' भावप्रकाशके ' । तथा ' स्वमरकोशे ' तु रसयोनिः
प्रकीर्तितः ॥ ९ ॥ द्वाविंशतिसंख्यकेति भिषग्भिः परिकीर्तितः । गुणाः ।
टंकणं तु कटूष्णं च कफनाशनमेव च ॥ १० ॥ स्थावरादि
विषघ्नं च कासश्वासहरं ' नृपे ' । दीपनोनिलवातिघ्नो रूक्षः 'कैयनिघंटके'
॥ ११ ॥ ' द्रव्यरत्ने ' ज्वरघ्नं च ' मदने ' वातपित्तकृत् । ८५ श्वेतटं-
कण । म० पांढरा टांकणखार । गु० धोळो टंकण । श्वेतं तु श्वेतकं चैव
श्वेतटंकणमेव च ॥ १२ ॥ लोहशुद्धिकरं सिंधुमालतीतीरसंभवं । शितं च
द्रावकं चैव सितक्षारं तथा ' नृपे ' ॥ १३ ॥ गुणाः । सुश्वेतं टंकणं
स्निग्धं कटूष्णं कफवातनुत् । आमक्षयापहच्छ्वास विषकासमलापहं ॥ १४
॥ प्रोक्तं ' राजनिघंटे ' तु वैद्यविद्याविशारदैः । ८६ साखरुंड । म०
साखरुंड, पडवास । गु० पडवास । साखरुंडो ग्रंथिफलो विकटो वस्त्रभूषणः
॥ १५ ॥ कुरुंदः कर्बुरफलः सतुरुंडस्तथा ' नृपे ' । गुणाः । साखरुंडः
कषायश्च रुचिकृद्दीपनः सरः ॥ १६ ॥ श्लेष्मवातापहारी च वस्त्ररंजनको
लघुः । ८७ हितावल्ली । म० गु० हितावली । हितावल्ली च हृद्वात्री

कुष्ठघ्नोंऽगारकुष्ठकः ॥ १७ ॥ अंगारग्रंथिको ग्रंथी ग्रंथिलो ' राजनामके ' गुणाः । हितावल्ली रसे तिक्ता प्लीहगुल्मोदरापहा ॥ १८ ॥ कृमिकुष्ठगुदार्त्युग्रस्वर्जूकंडूसुहारिणी । ८८ हस्तिमद । म० गु० हस्तिमद । हस्तिमदो गजमदो गजदानं मदस्तथा ॥ १९ ॥ कुंभिमदो दंतिमदो दानं द्वीपिमदो ' नृपे ' । गुणाः । स्निग्धो हस्तिमदस्तिक्त' वेश्योऽपपस्मारनाशनः ॥ २० ॥ विषहृत्कुष्ठक हृतिव्रणदद्रुविसर्पनुत् । ८९ स्वर्जिक्षार । म. गु. सज्जीखार । स्वर्जिक्षार स्वर्जिकश्च क्षारस्वर्जी सुखर्जिक. ॥ २१ ॥ सुवर्चिकः सुवर्ची च सुखवर्ची ' नृपे ' तथा । सर्जिका सर्जिकाक्षारः सुवर्चेश्च सुवर्चिका ॥ २२ ॥ ' धन्वंतरिनिघंटे ' तु समोक्ता

यव्यो 'धन्वनिघंटके' । यवनालजसंज्ञश्च यावशूकक एव च ॥ ३५ ॥
क्षारपाक्यं तीक्ष्णरसो याव्यो याव्हश्च 'केयके' । तथा 'मदनपाले' तु
शूकपाक्यः प्रकीर्तितः ॥ ३६ ॥ गुणाः । यवक्षारः कटूष्णश्च कफवातो-
दरापहा । आमशूलाश्मरीकृच्छ्रविषघ्नश्च सरो 'नृपे' ॥ ३७ ॥ रूक्षो-
ग्निदीपनस्तीक्ष्णो हृद्यो पित्तास्रदूषणः । 'धन्वे' प्रोक्तो तथा 'केये' अ-
र्शोघ्नो प्लीहगुल्महा ॥ ३८ ॥ गलामयानाहपांडुग्रहणी-श्वासहा तथा ।
९३ सर्वक्षार । म० सावण । साबू । सर्वक्षारो बहुक्षारः समूहक्षारक-
स्तथा ॥ ३९ ॥ स्तोमक्षारो महाक्षारो मलारिः क्षारमेलकः । गुणाः ।
सर्वक्षारो ह्यतिक्षारश्चक्षुष्यो बस्तिशोधनः ॥ ४० ॥ गुदावर्तकृमिघ्नश्च वस्त्र-
शुद्धिकरो 'नृपे' । ९४ मायाफल । म० मायफळ गु० माया । माया-
फलं मायिफलं छिद्राफलं च मायिका ॥ ४१ ॥ तथा मायि च संप्रोक्तं
'राजनामनिघंटके' । गुणाः । अथ मायाफलं प्रोक्तं कटूष्णं वातनाशनं
॥ ४२ ॥ योनिसंकोचकृच्चैव केशकृष्णीकरं 'नृपे' ।

## ५. मूलकादिवर्गः ।

१ मूलक । म० मुळा । गु० मूळा । मूलकं नीलकंठं च मूलाव्हं दी-
र्घमूलकं ॥ ४३ ॥ भूक्षारं कंदमूलं स्याद्धस्तिदन्तं सितं तथा । शंखमूलं
हरित्पर्णं रुचिरं दीर्घकंदकं ॥ ४४ ॥ कुंजरक्षारमूलं च प्रोक्तं 'राजनि-
घंटके' । नीलकंदं महाकंदं मृत्तिकाक्षारमेव च ॥ ४५ ॥ रुचिष्यं हरि-
पर्णं च 'धन्वंतरिनिघंटके' । स्वास्तिको हरितकंदश्च नीलपर्णं तथैव च ॥
॥ ४६ ॥ बस्तिकाक्षारसंज्ञं च द्रवदंशक्षमं तथा । तीक्ष्णं तु 'केयदेवे' च
भिषग्भिः परिकीर्तितं ॥ ४७ ॥ करिदंतीमसंज्ञश्च क्षुद्रमूलं च मिश्रकं ।
'द्रव्यरत्नाकरे' प्रोक्तं भिषग्विद्याविशारदैः ॥ ४८ ॥ दंतोज्वलं तु विदितं
तथा मूलकपोतिका । प्रोक्ता 'मदनपाले' तु वैद्यशास्त्रज्ञपंडितैः ॥ ४९ ॥
'भावप्रकाशे' संप्रोक्तं मिश्रं शालेयकं तथा । तथा 'गणनिघंटे' तु
मृत्तिकाक्षारसेवितं ॥ ५० ॥ ततो व्यक्तिरसं चैव रुचिकं तदनंतरं ।
मूलकस्य च संख्याका संप्रोक्ता भिषजावरैः ॥ ५१ ॥ गुणाः । मूलकं
तीक्ष्णमुष्णं च कटुग्राही च दीपनं । दुर्नामगुल्महृद्रोगवातघ्नं रुचिदं गुरु ॥

॥ ५२ ॥ 'राजनामनिघंटे' च संप्रोक्त वैद्यनायकैः । ज्वरनासारोगहरं कंठरोगविनाशन ॥ ५३ ॥ स्नेहलिप्त त्रिदोषघ्न प्रोक्त 'भावप्रकाशके'। भोजनारभाक् पित्तलं च दाहकारि प्रकीर्तित ॥ ५४ ॥ आमत्रिदोषहृत् स्निग्ध विष्टभी कफवातहृत् । प्रोक्त 'धन्वनिघंटे' च । वैद्यविद्याविशारदे ॥ ५५ ॥ स्वर्यं हृद्य दतशूलनाशन कोष्ठशुद्धिद । उदावर्तं पीनसाल्प कासयुक्तक्षय तथा ॥ ५६ ॥ श्वास व्रण नेत्ररोग हंत्यत 'केयदेवके'। तत्रैव रुक्ष दाहीति कीर्तित वैद्यनायके ॥ ५७ ॥ शुष्क शोपहर चैव दोषत्रयविनाशन । तत्पुष्प कफपित्तघ्न फल वातकफापह ॥ ५८ ॥ २ चाणाक्यमूलक । म थोर मुळा । गु मोटा मूळा । चाणाक्यमूलक चान्यच्छालेय विष्णुगुप्तक । स्थूलमूल महाकद कौटिल्य मरुसभव ॥ ॥ ५९ ॥ शालामर्कटक मिश्र प्रोक्त 'राजनिघटके'। शालामर्कटक चैव 'धन्वतरिनिघटके' ॥ ६० ॥ कपोतिका बालमूल 'केयदेवनिघटके'। गजदतसमान च तथा नेपालमूलक ॥ ६१ ॥ 'भावप्रकाशे' सप्रोक्ता तथा मूलकपोतिका । गुणाः । चाणाक्यमूलक प्राहि कटु रुच्य दीपन ॥ ६२ ॥ गुरूष्ण वफवातघ्न कृमिगुल्महर 'नृपे'। ३ गृंजनं । म० गु० लाल मुळा, शेंडीमुळा । गृजन शिखमूलं च यवनेष्ट च वर्तुलं ॥ ॥ ६३ ॥ ग्रंथिमूल शिखाकद कंद डिंडीरमोदक । प्रोक्त 'राजनिघटे' तु भिषक्विद्याविशारदैः ॥ ६४ ॥ गुणाः । गृजन कटूष्ण च कफ वातरुजापह । रुच्य च दीपन हृद्य दुर्गंध गुल्म ह 'नृपे' ॥ ६५ ॥ ४ पिंडमूलक । म. वाटोळा मुळा । गु० गोळ मूळा । पिंडमूल गजाह्व च पिंडक पिंडमूलक । गुणाः । पिंडमूल कटूष्णं च वातगुल्महरं 'नृपे' ॥ ६६ ॥ ५ गाजर । म गु गाजर । गार्जरं पिंडमूलं च पीतवं च समूलकं । स्वादुमूलं सुपीतं च नारंगं पीतमूलकं ॥ ६७ ॥ प्रोक्त 'राज निघंटे' तु वैद्यशास्त्रज्ञपंडितैः । गर्जर पिंगल मूलं पिंगमूलं च मूलकं ॥ ६८ ॥ पीतकंदं गृंजरं च 'धन्वंतरिनिघंटके'। तथा 'मदनपाले' तु प्रोक्तो नारगवर्णकः ॥६९॥ गुणाः । गर्जरं मधुरं रुच्यं किंचित्कटु कफापहं । आध्मानकृमिशूलघ्नं दाहपित्ततृषापह ॥ ७० ॥ प्रोक्तं 'राजनिघंटे'

शरघवो । श्वेतशिग्रुस्तथा तीक्ष्णो मुखमग सिताव्हयः ॥ ८९ ॥ सुमूल श्वेतमरिचो रोचनः शिग्रुकस्तथा । प्रोक्तो ' राजनिघंटे ' च श्वेतको ' धन्वनामके ' ॥ ९० ॥ ' द्रव्यरत्नाकरे ' चैव प्रोक्तः सितच्छदस्तथा दिव्सल्या च सदा प्रोक्ता पुरातनचिकित्सकै ॥९१॥ गुणाः । शोफानिलहरो रूच्यो दीपनो मुखमाड्यहा । तथैव कटुतीक्ष्णश्च चोष्णस्त्वगव्यथा हरः ॥ ९२ ॥ श्वेतस्तु शिग्रुकः प्रोक्तो ' नृपनामनिघण्वे ' । ९ रक्त शिग्रु । म० रक्तशेपगा । गु० रातो शरघवो । रक्तको रक्तशिग्रु स्यान्मधुरो बहुलच्छदः ॥ ९३ ॥ मुगधकेसर सिंहो मृगारिश्च ' नृपे ' तथा । ' धन्वतरिनिघंटे ' तु समोषो मधुशिग्रुकः ॥ ९४ ॥ रक्तान्य शिग्रुकश्चैव तथैव मधुगृजनः । स्वादुगधिर्गृमनकः शिग्रुक ' चेयदेवके '

घ्नो गुल्मघ्नो शूलनाशनः । प्रोक्तो 'राजनिघंटे' ॥ वैद्यविद्याविशारदैः ॥ ७ ॥ १२ वंशांकुर । म० वेळूचे अंकुर । गु० वांसना अंकुर । वंशाग्रं तु करीरश्च तथा यवफलांकुरः । वंशांकुरश्च संप्रोक्तो 'राजनामनिघंटके' ॥ ८ ॥ १३ वंशग्रंथि । म० वेळूची गांठ । वंशग्रंथिः परुः पर्वः कांडसंधिश्च 'राजके' । गुणाः । करीरं कटु तिक्ताम्लं कषायं लघु शीतलं ॥ ९ ॥ पित्तास्रदाहकृच्छ्रघ्नं रुचिकृत्परपर्व निर्गुणं । 'राजनामनिघंटे' तु प्रोक्तं वैद्यविशारदैः ॥ १० ॥ बस्तिशोधनकश्चैव भेदनः कफहारकः । पित्तासृक्रुव्हकुष्ठशोफघ्नो व्रणनाशनमेव च ॥ ११ ॥ मूत्रकफघ्नश्च प्रोक्तो 'कयनिघंटके' । १४ वेत्र । म० थोर वेत । गु० मोटुं वेतर । वेत्रो वेतो योगिदंडः सुदंडो मृदुपर्वकः । गुणाः । वेत्रः पंचविधः शैत्यकषायो भूतपित्तहृत् ॥१२॥ प्रोक्तो 'राजनिघंटे' तु 'धन्वे' पुत्रविनाशनः । १५ माकंदी । म० माईणमूळ । गु० मायमूळ । माकंदी बहुमूला च मादनी गंधमूलिका ॥ १३ ॥ एका विशदमूली च श्यामला चापरा 'नृपे' । गुणाः । माकंदी कटुका तिक्ता मधुरा दीपनी परा ॥ १४ ॥ रूच्याऽल्पवातुला पथ्या न मर्षोसु हिता 'नृपे' । १६ शोली । म० रानहळद, सोली । गु० सोली नामक वनहलदर । शोली वनहरिद्रा च वनारिष्टा च शोलिका ॥ १५ ॥ गुणाः शोलिका कटु गौल्या च रुच्या तिक्ता च दीपनी । प्रोक्ता 'राजनिघंटके' तु पुरातनचिकित्सकैः ॥ १६ ॥ १७ शृंगाटक । म० शिंगाडे । गु० शिंगोडा । शृंगाटकः शृंगरुहो जलवल्ली जलाश्रया । शृंगकंदः शृंगमूलो विषाणी 'राजनामके' ॥ १७ ॥ शृंगाटः सत्तनाडीकः संप्रोक्तो 'धन्वनामके' । जलकंटस्त्रिकोणश्च त्रिवर्यस्त्रिक एव च ॥ १८ ॥ कसेरुकं 'कैयदेवे' भिषग्भिः परिकीर्तितः । 'भावप्रकाशे' संप्रोक्तं त्रिकोणफलमित्यपि॥१९॥ तथा जलफलं प्रोक्तं भिषग्विद्याविशारदैः । 'द्रव्यरत्नाकरे' चैव त्वंबुकंद प्रकीर्तितः ॥२०॥ गुणाः । शृंगाटकस्तु संप्रोक्तो रक्तपित्तहरः सरः । लघुर्ष्यस्त्रिदोषघ्नः पित्तभ्रमविनाशनः ॥ २१ ॥ शोफहा रात्रिदश्चैव मेहघ्नो 'राजनामके' । त्रिदोषज्वरनिघ्नश्च प्रोक्तो वैद्यविशारदैः ॥

॥ २२ ॥ १८ भृंगाव्हा । म० भवरसाली । गु० भमरछाल ॥ भृंगाव्हा भ्रमरच्छली भ्रमरा भृंगमूलिका । भृंगच्छली तु कविभिः संप्रोक्ता 'राजनामके' ॥२३॥ ततो भ्रमरवल्ली तु 'धन्वंतरिनिघंटके'। उग्रगंधा छदः क्षारदुमाव्हो भ्रमरत्वचा ॥ २४ ॥ भ्रमरश्चैव विज्ञेयो 'द्रव्यरत्ननिघंटके' गुणाः । भृंगाव्हा तु कटूष्णा च तिक्ता दीपनरोचनी ॥ २५ ॥ १९ पेऊ । म० रानआलें । गु० वनआदू । पेऊ वनार्द्रका प्रोक्ता वनजाऽरण्यजाऽऽर्द्रका । प्रोक्ता 'राजनिघंटे' तु पंचसंख्या भिषग्जनैः॥२६॥गुणाः॥ पेऊ तु कटुकाऽम्ला च रुचिकृद्वल्यदीपनी । २० रसोन । म०॥ पाढरा लसूण । गु० लसण । रसोनस्तु लशूनश्च ह्यरिष्टो म्लेच्छकंदकः॥ २७ ॥ महौषधं च मूलग्रस्तूग्रगंधश्च 'राजके'। जुगुप्सितोम्लकांतश्च रसायनवरो "गणे" ॥ २८ ॥ गुणाः॥ लसुनोम्लरसश्चैव गुरूष्णः कफवातहा । अरुचिक्रिमिहृद्रोगशोफघ्नश्च रसायनः ॥ २९ ॥ कटुस्निग्धः पिच्छलश्च बल्यो वृष्यस्तथैव च । भग्नास्थिसंधानकरो मेधावी स्वरवर्णकृत् ॥ ३० ॥ गुरु स्वादुरसस्तीक्ष्णश्चक्षुष्यो 'राजनामके'। 'धन्वे' तु श्वासहा प्रोक्तो 'मदने' रक्तपित्तकृत् ॥ ३१॥ हिध्मपीनसकासघ्नो 'गणे' प्रोक्तो भिषग्जनैः । २१ महाकंद । म० लाल लसूण । गु० राता लसण । महाकंदो गृंजनश्च दीर्घपत्रः पृथुच्छदः ॥ ३२ ॥ यवनेष्टः स्थूलकंदस्तथैव च विनिर्हित । सप्तसंख्या भिषग्श्रेष्ठैः समोक्ता 'राजनामके' ॥ ३३॥ गुणाः । गृंजनस्य मधुरं कटु कंदं नाल्पमप्युपदिशंति यथार्थं । पत्रमंचयमुशंति च तिक्तं सूरयो लवणमस्थि वदंति ॥ ३४ ॥ हृद्रोगजीर्णज्वरकुक्षिशूलविबंधगुल्मारुचिकृच्छ्रशोफान् । दुर्नामकुष्ठानिलसादजंतुकफामयान्घ्नन्ति महारसोनः ॥ ३५ ॥ २२ पलांडु । म० पांढरा कांदा । गु० डुंगळी । पलांडुस्तीक्ष्णकंदश्च उष्णो च मुखदूषणः । शूद्रप्रिय कृमिघ्नश्च दीपनो मुखगंधक ॥३६॥ बहुपत्रो विश्वगंधो रोचनो 'राजनामके'। यवनेष्टः मुकुंदश्च 'धन्वंतरिनिघंटके' ॥ ३७ ॥ तथा 'मदनपाले' तु दुर्गंधः परिकीर्तितः । दुर्गंधास्यस्तथा प्रोक्तो 'गणनामनिघंटके' ॥ ३८ ॥ हरितोऽन्यः पलांडुश्च ख्यातो हृद्धुमो 'घने'। हारिद्रोऽन्यस्तथा प्रोक्तो

'राजनामनिघंटके' ॥ ३९ ॥ गुणाः । पलांडुः कटुको बल्यः कफपित्त-
हरो गुरुः । वृष्यश्च रोचनः स्निग्धो वांतिहृ 'द्राजनामके' ॥ ४० ॥
'मदने' वीर्यकृत्प्रोक्तं 'भावे' लशुनसाम्यकः । कफकृत्तत्र संप्रोक्तो
वैद्यविद्याविचक्षणैः ॥ ४१ ॥ गुरुर्वातास्रपित्तघ्नो मधुरो कृमिना-
शनः । अन्यः क्षीरपलांडुश्च वृष्यो मधुरपिच्छलः ॥ ४२ ॥ प्रोक्तो
'धन्वनिघंटे' तु तद्बीजं वातलं स्मृतं । कीटघ्नं शीतलं 'द्रव्ये' वृष्यं
मोहकरं तथा ॥ ४३ ॥ वाताशोघ्नं कफघ्नं च प्रोक्तं 'गणनिघंटके' ।
२३ राजपलांडु । म० तावडा कांदा । गु० राती डुंगळी ५। ततो राज-
पलांडुश्च यवनेष्टो नृपाव्हयः ॥ ४४ ॥ राजप्रियो महाकंदो दीर्घपत्रश्च
रोचकः । नृपेष्टो नृपकंदश्च रक्तकंदो नृपप्रियः ॥ ४५ ॥ राजेष्टश्च तथा
प्रोक्तो 'राजनामनिघंटके' । गुणाः । पलांडुर्नृपपूर्वश्च शिशिरः पित्तना-
शनः ॥ ४६ ॥ कफवृद्धिपनश्चैव बहुनिद्राकरो 'नृपे' । २४ सूरण ।
म० गु० सूरण । कंदुलः सूरणः कंदो सुकंदो स्थूलकंदकः ॥ ४७ ॥
दुर्नामारिः सुवृतश्च वातारिः 'कदसूरणः । अर्शोघ्नस्तीव्रकंदश्च कंदार्हः
कंदवर्धनः ॥ ४८ ॥ बहुकंदो रुच्यकंदः सुरकंदस्तथा 'नृपे' । सुरेंद्रको
वज्रकंदो चित्रकंदस्तु 'कैयके' ॥ ४९ ॥ गुदजघ्नस्तु कंदघ्नं कंदाली
कंदकस्तथा । 'द्रव्यरत्नाकरे' चैव प्रोक्तो वैद्यविशारदैः ॥ ५० ॥ गुदा-
मयहरश्चैव कुंदलो 'मदने' स्मृतः । गुणाः । सूरणः कटु रुच्यश्च दीप-
नः कृमिनाशनः ॥ ५१ ॥ कफवातश्वासकासवमनार्शोहरस्तथा । शूलगु-
ल्महरश्चैव रक्तदोषहरो 'नृपे' ॥ ५२ ॥ आमदोषहरश्चैव पाचनो
'धन्वनामके' । विशदश्चैव रूक्षश्च विष्टंभी च कषायकः ॥५३॥ बलास-
गुदकीलघ्नः प्रोक्तः 'कैयनिघंटके' । सर्वेषां कंदशाकानां सूरणः श्रेष्ठ
उच्यते ॥ ५४ ॥ दद्रूणां रक्तपित्तीनां कुष्ठिनां न हितो हि सः । कटु-
कृच्च तथा प्रोक्तो 'मातनामनिघंटके' ॥ ५५ ॥ २५ अरण्यसूरण ।
म० रानसूरण । गु० चांतलकंद, शेरीसूरण । सितसूरणश्च वन्यश्च वनजो-
ऽरण्यसूरणः । वनकंदः वंदुलश्च 'नृपे' तु श्वेतसूरणः ॥ ५६ ॥ उक्तस्तु
'कैयदेवे' च 'द्रव्यरत्नाकरे' तथा । सुरेंद्रकश्चित्रदंडः वज्रकंदश्च

कदकः ॥ ५७ ॥ गुणाः । वनस्थ सूरणो रुच्य कटूष्णः कृमिगुल्महा । शूलहाऽरुचिहृचैव प्रोक्तो ' राजनिघंटके ' ॥ ५८ ॥ ' द्रव्ये ' पित्तकरो रूक्षो हृद्यः कफविनाशन । २६ मुखालु । म० मोहाळू । कों० कोनफळ, गोराडू । गु० गोराडू । मुखालुर्मंडपारोहो दीर्घकंदः सुकदक ॥ ५९ ॥ स्थूलकंदो महाकंदः स्वादुकंदस्तु ' राजके ' । गुणाः । मुखालुमधुर· शीत पित्तहा रुचिवातकृत् ॥ ६० ॥ प्रोक्तो ' राजनिघंटे ' तु दाहशोष· तृषापहा । रक्तदोषहरश्चैव शोफहा ' द्रव्यनामके ' ॥ ६१ ॥ २७ पिंडालु । म० पेंडाळू । कों० कनव, कणगी । पिंडालुर्ग्रंथिलः पिंडकः दस्ताबूलपत्रकः । ग्रंथी रोमकंदो रोमालुरोमशस्तथा ॥ ६२ ॥ नानाकंद पिंडकश्च ' राजनामनिघंटके ' । गुणाः । पिंडालुर्मधुर शीतो मूत्रकृ· च्छ्रामयापह ॥ ६३ ॥ दाहशोषप्रमेहघ्नो वृष्य· सतर्पणो गुरु । ' द्रव्यरत्ने ' दुर्जर च समीक्ष्य नैव सशय ॥ ६४ ॥ २८ रक्तपिंडालु । म० काल राताळू । गु० रताळू । रक्तालु रक्तपिंडालु रक्तपिंडश्च लोहित । रक्तकंदो लोहितालुः प्रोक्तो ' राजनिघंटके ' ॥ ६५ ॥ गुणाः । रक्तपिं· डालुक शीतो मधुराम्ल श्रमापह । पित्तदाहापहो वृष्यो गुरुर्बल्यो 'नृपे' तथा ॥ ६६ ॥ २९ कासालु । म० कासाळू । गु० कासालु । कासालु कासकंदश्च कदालुश्चाऽऽलुकस्तथा । आलुर्विशालपत्रश्च पत्रालुश्चेति 'राज के' ॥६७॥ कासभेदस्तु कांडालुस्त्वलुनो ' धन्वनामके ' । गुणाः । कासालुरुप्मक द्रूनिवातश्लेष्मामयापह ॥६८॥ अरोचकहरः स्वादुः पथ्यो दीपन 'राजके' । ३० फोंडालु । म० गु० फोंडाळू । फोंडालुर्लोहितालुश्च रक्तपत्रो मृदुच्छद· ॥ ६९ ॥ गुणा । फोंडालु श्लेष्मवातघ्नः षट्रूष्णो दीपनो ' नृपे ' । ३१ पानीयालु । म० पाणअळू । गु० पाणअळवी । पानीयालुर्जलालु स्यादनूपालुरवालुक ॥ ७० ॥ गुणा । पानीयालुस्त्रिदोषघ्न· सतर्पणकरो ' नृपे ' । ३२ नीलालु । म० काळें अळू । गु० काळी अळवी । नीलालु रसितालुश्च कृष्णालु श्यामलालुक ॥ ७१ ॥ गुणाः । नीलालुर्मधुर शीत श्रमहा दाहहा ' नृपे ' । ३३ महिषीकंद । म० गु० महिषीकंद । शुभ्रालुर्महिषीकंदः शुभ्रकंदो लुलायकः ॥ ७२ ॥ महि-

स्यो वनवासी च विषकंदस्तदुत्तरं । नीलकंदो राजनाम्नि प्रोक्तो वैद्यवि-
शारदैः ॥ ७३ ॥ गुणाः । कटूष्णो महिषीकंदः कफवातामयापहः । मुख-
जाड्यहरो रुच्यो महासिद्धिकरः सितः ॥ ७४ ॥ ३४ हस्तिकंद । म०
गु० हस्तिकंद । हस्तिकंदो हस्तिपत्रः स्थूलकंदोऽतिकंदकः । बृहत्प-
त्रोऽतिपत्रश्च हस्तिकर्णः सुकर्णकः ॥ ७५ ॥ त्वग्दोषारिः कुष्ठहंता गिरि-
वासी नगाश्रयः । गजकंदो नागकंदो 'राजनामनिघंटके' ॥ ७६ ॥
गुणाः । हस्तिकंदः कटूष्णश्च कफवातामयापहः । त्वग्दोषश्रमहा कुष्ठविषवी-
सर्पनाशकः ॥ ७७ ॥ ३५ कोलकंद । म० कोळकांदा, पाणकांदा ।
को० घापा । गु० कोलकांदा । कोलकंदः क्रमिघ्नश्च पंजलो वस्त्रपजलः ।
पुटालुः सुपुटश्चैव पुटकंदस्तथा 'नृपे' ॥ ७८ ॥ गुणाः । कोलकंदः कटु-
श्चोष्णो विषवातिक्रमिघ्नकः । ३६ वाराही । म० गु० डुकरकंद ।
वाराही सूकरी क्रोडकन्या गृष्टिश्च गृष्टिका ॥ ७९ ॥ कन्या विष्वक्सेन-
कांता वराही ब्रह्मपुत्रिका । क्रौडी त्रिनेत्रकौमारी माधवेष्टा महौषधिः॥८०
क्रोडो सूकरकंदश्च वन्यश्च कुष्ठनाशनः । वनवासी महावीर्यो तथा शबर-
कंदकः ॥ ८१ ॥ वराहकंदो वीरश्च ग्राम्यकंदः सुकंदकः । वृद्धिदो
व्याधिहंता च स्वमृतो 'राजनामके' ॥ ८२ ॥ माधवी सौकरी कांतिः
कांता च वनमालिनी । ववत्रालुः श्वासकंदश्च शौकरी 'कैयदेवके' ॥ ८३
'द्रव्ये' तु शबरीकंदः किटिः क्रोडा च 'मदने' । तथा कांक्षी च सं-
प्रोक्ता 'गणनामनिघंटके' ॥ ८४ ॥ विष्वक्सेनप्रिया चैव बदरा 'स्वमरे'
स्मृता । गुणाः । वाराही तिक्तकटुका विषपित्तकफापहा ॥ ८५ ॥ कुष्ठ-
मेहक्रमिहरा वृष्या बल्या रसायनी । 'नृपे' प्रोक्ता तथा 'द्रव्ये' धा-
तुघ्नी कफनाशनी ॥ ८६ ॥ मधुरातिशुक्लदा च तथा शुक्रकरा 'मदे' ।
मूत्ररोगहरा चोष्णा 'गणे' प्रोक्ता भिषक्जनैः ॥ ८७ ॥ ३७ विष्णु-
कंद । म० गु० विष्णुकंद । विष्णुकंदो विष्णुगुप्तः सुपुटो बहुसंपुटः ।
जलवासो बृहत्कंदो दीर्घवृत्तो हरिप्रियः ॥ ८८ ॥ गुणाः । विष्णुकंदस्तु
मधुरः शिशिरः पित्तदाहहा । शोफहा रुचिदश्चैव संतर्पणकरो 'नृपे' ॥
॥ ८९ ॥ ३८ धरणीकंद । म० गु० धरणीकंद । धरणी धारणी चैव

वीरपत्री सुगंधकः । कंदालुर्वनकंदश्च कंदाढ्यो दंडकंदकः ॥ ९० ॥ 'राजनाम्नि' तथा वीरपत्नी चैव सुकंदकः । कंदाढ्यश्च तथा प्रोक्तो वैद्यविद्याविशारदैः ॥ ९१ ॥ गुणाः । ततस्तु धरणीकंदो मधुरः कफपित्तहा । मक्त्रदोषहरः कंडूकुष्ठघ्नो 'राजनामके' ॥ ९२ ॥ ३९ नाकुली । म० मुंगुसकांदा । गु० नकुलकंद, नोळवेल । नाकुली सर्पगंधा च सुगंधा रक्तपत्रिका । ईश्वरी नागगंधा च स्वहिभुक् सुरसा तथा ॥ ९३ ॥ सर्पादनी व्यालगंधा प्रोक्ता 'राजनिघंटके' । तथा सर्पसुगंधा च तथैव भोगिगंधिका ॥ ९४ ॥ 'धन्वंतरिनिघंटे तु प्रोक्ता रोचकपत्रिका । नकुलेष्टा महातीर्था विषघ्नी सुवहा तथा ॥ ९५ ॥ सुनंदा विषदंष्ट्री च 'कैये' तु चिरपत्रिका । ततो नागसुगंधा च भुजंगाक्षी तथैव च ॥ ९६ ॥ सर्पांगी विषनाशा च प्रोक्ता 'भावप्रकाशके' । ४० गंधनाकुली, सर्पाक्षी । म० सुगंध मुंगुसकांदा । गु० सुगंध नकुलकंद । अन्या महासुगंधा च सुवहा गंधनाकुली ॥ ९७ ॥ सर्पाक्षी फणिहंत्री च नकुलाख्याऽहिभुक् तथा । विषमर्दनिका चाहिमर्दिनी विषमर्दिनी ॥ ९८ ॥ महाहिगंधाऽहिलता प्रोक्ता 'राजनिघंटके' । नकुलेष्टा तु छत्राक्षी 'धन्वंतरिनिघंटके' ॥ ९९ ॥ छत्राकी कामचारी च 'कैये' तु सर्पलोचना । गुणाः । नाकुलीयुगुलं तिक्तं कटूष्णं च त्रिदोषजित् ॥ १०० ॥ अनेकविषविध्वंसि 'राजनामनिघंटके' । कृमिवृश्चिकसर्पादिविषहृत् व्रणरोपणं ॥ १ ॥ 'धन्वंतरिनिघंटे' च 'कैये' सस्तलूतापहं । ४१ मालाकंद । म० गु० मालाकंद । मालाकंदः पंक्तिकंदस्तथा च त्रिशिखीदला ॥ २ ॥ कंदलताऽऽवल्लीकंदो ग्रंथिदला तु 'राजके' ॥ गुणाः । मालाकंदो गंडमालानाशनो दीपनस्तथा ॥ ३ ॥ गुल्महा वातश्लेष्मघ्नस्तीक्ष्णश्च 'नृपनामके' । ४२ विदारीकंद । म० भुईकोहळा । कॉं० मेंदरीचा कांदा । गु० भोंयकोहळुं । विदारिका स्वादुकंदा सिता शुक्ला शृगालिका ॥ ४ ॥ विदारी वृष्यकंदा च बिडाली वृष्यवल्लिका । भूकूष्मांडी स्वादुलता गजेष्टा वारिवल्लभा ॥ ५ ॥ तथा कंदफला चैव 'राजनामनिघंटके' । तथा इक्षुविदारी च बल्लिशाकफला तथा ॥ ६ ॥ तद्वत्कंदपलाशश्च श्रेष्ठकंदेक्षुवल्लरी । कंदपत्री वृष्यफला

त्विसुकंदेक्षुवल्लिका ॥ ७ ॥ तथा चेक्षुलता चैव प्रोक्ता 'केयनिघंटके'। ऋष्यगंधो विडालिश्च ऋष्यपर्णी तु 'द्रव्यके' ॥ ८ ॥ क्रोष्टी 'भावप्रकाशे' च गजवाजिप्रिया 'गणे'। गुणा । विदारी मधुरा शीता गुरु स्नि ग्धाऽस्रपित्तजित् ॥ ९ ॥ कफकृत्पुष्टिकृद्बल्या 'नृपे' वीर्यविवर्धनी। 'धन्वे' समीरजित्प्रोक्ता 'केये' स्वर्या तथैव च ॥ १० ॥ वर्णदा स्त न्यदा प्रोक्ता 'द्रव्ये' तु वातजित्तथा । रक्तदाहहत् चैव प्रोक्ता 'मदनपालके'॥ ११ ॥ ४३ क्षीरविदारी । म० श्वेतभुईकोहळा । गु० घोळू भोंकोंळू । तत क्षीरविदारी स्यादिक्षुगंधेक्षुवल्लरी । इक्षुवल्ली क्षीरकंदः क्षीरवल्ली पयस्विनी ॥ १२ ॥ क्षीरशुक्ला क्षीरलता पयःकदा पयोलता । पयोविदारिका चैव प्रोक्ता 'राजनिघंटके' ॥ १३ ॥ शुक्ला तु क्षीरशुक्ला च विक्षुपर्णी सुकंदका । सुक्लकंदा महाश्वेता पयस्विनी- क्षुगंधिका ॥ १४ ॥ 'केयदेवनिघंटे' तु प्रोक्ता वैद्यविशारदैः । 'द्रव्ये' त्विक्षुलता चैव ऋक्षगंधाऽ 'मरे' तथा ॥ १५ ॥ गुणाः । अथ क्षारविदारी तु मधुराम्ला कषायका । तिक्ता च पित्तशूलघ्नी मूत्रमेहहरा 'नृपे' ॥ १६ ॥ क्षीरकंदो द्विधा प्रोक्तो विनाऽस्तु सनालक । विनालो रोगहर्ता स्याद्वयस्तंभी सनालक ॥ १७ ॥ ४४ शाल्मलीकंद । म० सावरीकंद । गु० शेमळानो कंद । शाल्मलीकंदकश्चाथ विजुलो वनवासक । वनवासी महाघ्नश्च मन्हतेति 'रानके' ॥ १८ ॥ गुणा० । ततस्तु शाल्मलीकंदो मधुरो मन्दरोधजित् । शिशिर पित्तदाहघ्नो शोफम तापहा 'नृपे' ॥ १९ ॥ ४५ चडालकंद । म० गु० चडाळकंद । प्रो- क्तश्चडालकंदः स्यादेकपत्रो द्विपत्रक । त्रिपत्रोऽथ चतुष्पत्रः पंचपत्रश्च भेदत ॥ २० ॥ गुणा । चडालकंदो मधुरः कफपित्तास्रदोषभित् । विषभूतहर प्रोक्तो 'नृपे' चैव रसायन ॥ २१ ॥ ४६ तैलकंद । म० गु० तेलकंद । तैलकंदो द्रावकंदस्तिलाकितदलस्तथा । तत करवीरकंद- रितलचित्रपत्राव्हकः ॥ २२ ॥ गुणाः । तैलकंदो लोहद्रावी कटूष्णो विषहारक । वातापस्मारशोफघ्नो तथा च रसबंधक ॥ २३ ॥ देहशुद्धि कर प्रोक्तो 'राजनामनिघंटके' । तैलकंदस्वरूपः । अश्वारिपत्रमकारा-

स्तिलबिंदुसमन्वितः ॥२४॥ सस्निग्धाधस्थभूमिश्च तिलकंदोऽतिविस्तृतः ।
४७ त्रिपर्णीकंदः । म० त्रिपर्णीकन्द । त्रिपर्णिका बृहत्पत्री छिन्नग्रंथिनिका
तथा ॥२५॥ कदाल कदवहल्लाऽप्यम्लवल्ली विषापहा । गुणाः । त्रिपर्णी
मधुरा शीता श्वासकासव्रणापहा । पित्तप्रकोपशमनी विषघ्नी 'राजनामके'
॥ २६ ॥ ४८ लक्ष्मणाकंद । म० गु० लक्ष्मणाकद । लक्ष्मणा पुत्रकंदा
च पुत्रदा नागिनी तथा । नागाव्हा नागपत्नी च तुलिनी मञ्जिका तथा ॥
॥ २७ ॥ अलबिंदुच्छदा चैव पुत्त्वदा 'राजनामके' । रक्तबिंदुच्छदा
नागा नागपत्री तथैव च ॥ २८ ॥ ततस्तु पुत्रजननी 'कैयदेवनिघण्टके' ।
रम्या तु बिंदुपत्रा च 'द्रव्यरत्नाकरे' स्मृता ॥ २९ ॥ पुत्रकाकाररक्ता-
ल्पबिंदुभिर्लांछिता सदा । बस्तगंधाकृतिश्चैव समोक्ता 'भावनामके' ॥३०॥
गुणाः । लक्ष्मणा मधुरा शीता स्त्रीवन्ध्यत्वविनाशनी । रसायनकरी बल्या
त्रिदोषशमनी 'नृपे' ॥ ३१ ॥ रूक्षा वृष्या हिमा 'कैये' प्रोक्ता पित्ता
निलापहा । ४९ हस्तजोडिका । म० गु० हातजोडी । करजोडिर्हस्त-
जोडि प्रोक्तो 'राजनिघण्टके' ॥ ३२ ॥ गुणाः । वश्यकृत् करजोडिस्तु
रसबंधकरस्तथा । ५० मुसलीकंद । म० गु० काळी मुसळी । मुसली
तालमूली च सुवहा तालमूलिका ॥ ३३ ॥ गोधापदी हेमपुष्पी
भूताली दीर्घकंदिका । प्रोक्ता 'राजनिघण्टे' तु भिषग्विद्योपनी
विभिः ॥ ३४ ॥ हिरण्यपुष्पी खर्जूरी खल्विनी मोशली तथा ।
वृष्यकंदा ताम्रपत्री महावृष्या तु 'कयदे' ॥ ३५ ॥ महावृषा 'मदे'
चैव तथा कांचनपुष्पिका । गुणाः । मुसली मधुरा शीता वृष्या पुष्टिव-
प्रदा ॥ ३६ ॥ पिच्छिला कफदा पित्तदाहश्रमहरा परा । मुसली स्वा-
द्विका प्रोक्ता श्वेताऽपरसंज्ञका ॥ ३७ ॥ श्वेता स्वरसगुणोपेता अपरा च
रसायनी । 'नृपे' प्रोक्ता तथा 'कैये' अर्शोघ्नी वातनाशनी ॥ ३८ ॥
५१ गुच्छकंद । म० गु० गुच्छकंद । गुच्छाल्हकंदो गुच्छकंदस्तवक-
कंदक । त्रिदण्डिकाभिधा चैव त्रिदण्डिका तथा 'नृपे' ॥ ३९ ॥ गुणाः ।
गुच्छकंदो मधुरः शीतलो वृष्य एव च । संतर्पणो दाहहेति प्रोक्तो
'राजनिघण्टे' ॥ ४० ॥ ५२ ताम्बूल । म० पानवेल । गु० नागो ।

वास्तुकं वास्तु वास्तूकं वस्तूकं हिलमोचिका। शाकराजो राजशाकश्चक्रवर्ती 'नृपे', तथा॥ ४१॥ वीरशाकं शाकवीरः क्षारपत्रः प्रसादकः। 'केये' प्रोक्तस्तथा 'भावे' शाकराट् परिकीर्तितः॥ ४२॥ गुणाः। वास्तुकं मधुरं शीतं क्षारामलं त्रिदोषजित्। ज्वरार्शोघ्नं रोचनं च मलमूत्रादिशुद्धिकृत्॥ ४३॥ 'नृपे' प्रोक्तस्तथा 'केये' पाचनो हृद्य एव च। रक्तपित्तकृमिप्लीहोदावर्तघ्नः सरस्तथा॥ ४४॥ मेधाग्निकृच्च संप्रोक्तो बलकृच्चुक्रकृन्तथा। ५३ चुक्र। म० चुका। गु० चुको। चुक्रं तु चुक्रवास्तूकं लिकुचं चाम्लवास्तुकं॥ ४५॥ दलाम्लमम्लशाकाख्यमम्लादिहिलमोचिका। अम्लपत्रा तु कविभिः संप्रोक्तं 'राजनामके'॥ ४६॥ 'द्रव्यरत्नाकरे' चैव चुक्रकं परिकीर्तितं। चुक्रिका चैव पत्राम्ला रोचनी शतवेधिका॥ ४७॥ प्रोक्ता 'भावप्रकाशके' तु वैद्यविद्याविशारदैः। वेदसंख्यका प्रोक्ता पुरातनचिकित्सकैः॥ ४८॥ गुणाः। चुक्रं त्वम्ललघूष्णं च वातगुल्मविनाशनं। रुचिकृद्दीपनं पथ्यमीषत्पित्तकरं 'नृपे' ॥ ४९॥ ५४ चिल्लिका। म० चाल, रक्त चील, चंदनबटवा। गु० चील। पलाशलोहिता चिल्ली वास्तुका चिल्लिका तथा। मृदुपत्री क्षारदला चीरपत्री तु वास्तुकी॥ ५०॥ दलाम्रलोहिता चैव प्रोक्ता 'राजनिघंटके'। बृहद्दला तु रक्ता च तथैव गौडवास्तुका॥ ५१॥ प्रोक्ता 'मदनपाले' तु वैद्यविद्याविशारदैः। गुणाः। चिल्ली वास्तुकतुल्या च सक्षारा श्लेष्मपित्तनुत्॥ ५२॥ प्रमेहमूत्रकृच्छ्रघ्नी पथ्या तु रोचनी 'नृपे' ५५ श्वेतचिल्ली। म० लघु चाकवत, पाढरी चील। गु० धोळी चील। श्वेतचिल्ली तु वास्तूकी सुपथ्या श्वेतचिल्लिका॥ ५३॥ सितचिल्ल्युपचिल्ली च ज्वरघ्नी क्षुद्रवास्तुकी। प्रोक्ता 'राजनिघंटे' तु वसुसंख्या भिषग्वरैः॥ ५४॥ गुणाः। श्वेतचिल्ली सुमधुरा क्षारा च शिशिरा तथा। त्रिदोषशमनी पथ्या ज्वरदोषविनाशिनी॥ ५५॥ ५६ शुनकचिल्ली। म. गु. कुत्तरचील। शुनकचिल्ली सुचिल्ली श्वानचिल्लीति 'राजके'। गुणाः। श्वचिल्ली कटुतीक्ष्णा च कंडुव्रणहरा 'नृपे'॥ ५६॥ ५७ शिग्रुपत्रशाक। म० शेवग्याच्या पानाची भाजी। गु० शरगवानी भाजी। गुणाः। शिग्रुप-

त्रभत्र शाकं रुच्यं वातकफापहं । कटूष्णं दीपनं पथ्यं कृमिघ्नं पाचनं 'नृपे' ॥ ५७ ॥ ५८ पालक्य । म० गु० पालखं । पालक्यं तु पालक्या च मधुरा क्षुरपत्रिका । सुपत्रा स्निग्धपत्रा च ग्रामीणा ग्राम्यवल्लभा ॥ ५८ ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यविद्यापरायणैः । 'द्रव्यरत्नाकरे' चैव क्षुरिका परिकीर्तिता ॥ ५९ ॥ तथा 'मदनपाले' तु समोक्ता क्षुरपत्रिका । गुणाः । पालक्यमीषत्कटुकं मधुरं पथ्यशीतलं ॥६०॥ रक्तपित्तहरं ग्राहि तथा मतर्पणं 'नृपे' । ५९ राजगिरा । म० राजगिरा । गु० राजगरो। राजाभिधानपूर्वा तु नगाव्हाद्यपरेण तु ॥ ६१ ॥ राजाद्रि स्याद्राजगिरिः 'नृपे' तु राजशाकिनी । गुणाः । राजशाकिनिका रुच्या पित्तघ्नी शीतला तथा ॥ ६२ ॥ नैवाति शीतला रुच्या 'नृपे' तु स्थूलशाकिनी । ६० उपोदकी । म० माडवावरील थोर वेल, थोर मयाळ, थोर पोई ।। गु० मोटी पोथी । उपोदकी कलम्बी च पिच्छला पिच्छलच्छदा ॥ ६३ ॥ मोहिनी मदशाकश्च विशाला 'राजनामके' । मच्छशाली पोतकी सुलगा 'द्रव्यरत्नके' ॥ ६४ ॥ उपोदका मदघ्नी च सुगया मदशाकिका धृदारवा तु पटकी प्रोक्ता गणनिघंटके ॥ ६५ ॥ पट्भूमिमस्तपका प्रोक्ता पुरातनचिकित्सकैः । गुणाः । उपोदकी कषायोष्णा विष्टम्भश्लेष्मकारिणी ॥ ६६ ॥ कटुका मधुरा रुच्या निद्रालस्यकरी 'नृपे' । 'द्रव्ये' शीता शुक्रकारी 'गणे' मेहहरा स्मृता ॥ ६७ ॥ ६१ क्षुद्रोपोदकी । म० लहान मयाळ । गु० नहानी पोथी । उपोदकी परा क्षुद्रा सूक्ष्मपत्रा तु मडपी । गुणाः । रसवीर्यविपाकेषु सदृशी पूर्वया स्मृता ॥ ६८ ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यविद्याविशारदैः । ६२ वनजोपोदकी । म. रानमयाळ गु० वनपोथी । वनजा वनजाव्हा च वनजोपोदकी 'नृपे' ॥ ६९ ॥ गुणाः। वनजोपोदकी तिक्ता कटूष्णा रोचनी च सा ।६३ मूलपोती। म० मळ्यातील मयाळ । मूलपोती क्षुद्रवल्ली पोतिका क्षुद्रपोतिका ॥ ७० ॥ क्षुद्रोपोदकनाम्नी च यष्टि शाकपोतिका । वल्लिशाकस्तथा यष्टिपोतिका 'राजनामके' ॥ ७१ ॥ गुणाः। मूलपोती त्रिदोषघ्नी हृद्या बल्या लघुश्च सा । मलपुष्टिकरी रुच्या जठरानलदीपनी ॥ ७२ ॥ ६४ कुणंजर । म.

कुंभेर । गु. कमेशरो । गुणाः । कुणंजरस्त्रिदोषघ्नो मधुरो रुच्यदीपक. ॥
॥ १९७३ ॥ ईषत्कषाय संग्राही पित्तश्लेष्मकरो लघु । प्रोक्तो 'राज-
निघंटे' तु भिषक्विद्याविशारदैः ॥ ७४ ॥ ६६ कौसुंभशाक । म०
करडईची भाजी । गु० कसुंबो । गुणाः । कौसुम्भशाकं मधुरं कटूष्णं विण्मू-
त्रदोषघ्नहर मदघ्न । दृष्टिप्रसादं कुरुते विशेषाद्रुचिप्रदं दीप्तिकरं च वन्हेः
॥ १९७५ ॥ प्रोक्तं 'राजनिघंटके' तु वैद्यविद्याविशारदैः । ६ शत-
पुष्पदल । म. शेपूची भाजी । गु. सुवा । शतपुष्पादल सोष्ण मधुरं
गुल्मशूलजित् ॥ ७६ ॥ वातघ्नं दीपनं पथ्यं पित्तकृद्रुचिद, 'नृपे' ।
६६ तंडुलीयपत्र । म. तांदुळजा । गु. तांदळजो । तंडुलीयकदल हिम-
मधं पित्तरक्तविषकासविनाशि । ग्राहक च मधुरं च विपाके दाहशोष-
शमन रुचिदायि ॥ ७७ ॥ प्रोक्तं 'राजनिघटे' तु वैद्यविद्याविशारदैः ॥
॥ ७८ ॥ ६७ राजिकापत्र । म. मोहरीची भाजी । गु. राईनी भाजी ।
गुणाः । कटूष्ण राजिकापत्र कृमिवातकफापह । कठामयहरं स्वादु वन्हि-
दीपनक 'नृपे' ॥ ७९ ॥ ६८ सार्षपपत्र । म. शिरसव पानाची भाजी ।
गु. सरशवनी भाजी । गुणाः । सार्षप पत्रमत्युष्ण रक्तपित्तप्रकोपकृत् ।
विदाहि कटुक स्वादु शुक्रहृद्रुचिद 'नृपे' ॥ ८० ॥ ६९ चांगेरीशाक ।
म. आमवतीची भाजी । गु. आंबोतीनी भाजी । चांगेरीशाकमत्युष्ण कटु
रोचनपाचन । दीपनं कफवातार्शः सग्रहण्यतिसारजित् ॥ ८१ ॥ प्रोक्तं
'राजनिघंटे' तु वैद्यशास्त्रविशारदैः । ७० घोली । म० साधारण
घोळ । गु० लुणी । घोला च घोलिका घोटी कलंघुप्कुमकालुक ॥
॥ ८२ ॥ 'राजनामनिघंटे' तु सप्रोक्ता भिषजांवरैः । लोणा 'कैये' तथा
'द्रव्ये' वनस्था त्वम्लपर्णिका ॥ ८३ ॥ दुर्जरा चैव पिच्छा च पुनर्भूः।
पिच्छलच्छदा । लोणिका 'कैयदेवे', च तथा 'भावप्रकाशके'
॥ ८४ ॥ बृहल्लोणी तु लोणी च प्रोक्ता वैद्यविशारदैः । क्षे-
त्रजा घोली । म. । शेतांतील घोळ । गुणाः । क्षेत्रजं लवण रुच्य-
मम्लं वातकफापहम् ॥ ८५ ॥ ७१ आरामघोलिका । म. मळ्यांतील
घोळ । गु. दुणीभेद । आरामघोलिका चाम्ला रूक्षा रुच्याऽनिलापहा ।

७२ सूक्ष्मघोलिका । म० चिघोळ । गु० झीणी लुणी । गुणाः ॥ पित्तश्लेष्मकरी चान्या सूक्ष्मा जीर्णज्वरापहा ॥ ८६ ॥ ७३ जीवशाक । म० गु० जीवशाक । जीवन्तो रक्तनालश्च ताम्रपत्रः सनालकः । शाकवीरस्तु मधुरो जीवशाकश्च मेघक ॥ ८७ ॥ प्रोक्तो 'राजनिघंटे' च 'कैयदेवे' तु वास्तुक । तथा जीवतेक प्रोक्तो वैद्यविशारदै ॥ ८८ ॥ गुणाः । जीवशाक सुमधुरो बृंहणो बस्तिशोधन । पित्तघ्नो दीपनो बल्यो पाचनो वृष्य एव च ॥ ८९ ॥ प्रोक्तो 'राजनिघंटे' तु त्रिदोषघ्नश्च 'कैयके' । ७४ गौर सुवर्णशाक । म० गु० गौरसुवर्णशाक । ततो गौरसुवर्णं च स्वर्णं सौगंधिकं तथा ९० ॥ भूमिजं वारिजं ह्रस्वं गंधशाकं तथैव च । कटुशृंगाटकं चैव वर्णशाकं तु 'राजके' ॥ ९१ ॥ गुणाः । गौरसुवर्णं शिशिरं कफपित्तज्वरापहम् । पथ्यं दाहारुचिभ्रान्तिरक्तश्रमहरं 'नृपे' ॥ ९२ ॥ वर्षाभूशाक । म० पाढऱ्या घेटुळीची भाजी । गु० विषखापरो । ७६ वसुपत्रशाक । म० पाढऱ्या वसूची भाजी । गु० धोळी वसु । गुणाः । वर्षाभूवसुकौ वर्णकफमाद्यानिलापहौ । शाके रूक्षतरौ गुल्मप्लीहशूलापहारकौ ॥ ९३ ॥ ७७ फंजिका, जीवनी, पद्मा, तर्कारी, चंचुक । म० फाज, हरणदोडी, भारंग, नरवेल, चोंच । गु० फाजी, डोडीशाक, भारंगी, अरणी, छुंछ । फंजिका जीवनी पद्मा तर्कारी चंचुका पृथक् । गुणा । वातामयहरं ग्राहि दीपनं रुचिदायकं ॥ ९४ ॥ फंजादिशाक । म० फाज वगैरे भाज्या । गु० फाजी आदीना पत्रनी भाजी । फंजादिपत्रक भेदा पुनर्जास्त्रिपुटस्तथा ॥ इत्यादिनवपत्राणां शाकमेकत्र योजितम् ॥ ९५ ॥ गुणाः । दीपनं पाचनं रुच्यं मलवर्णविधायक । त्रिदोषशमनं पथ्यं ग्राहि वृष्यं सुखावहम् ॥ ९६ ॥ कूष्मांडी । म० कोहळा । गु० भुरा कोळा । कर्कारु रा म कूष्मांडी कुमांडी तु बृहत्फला । पुष्पलाख्यात्पुष्पफला नागपुष्पफला 'नृपे' ॥ ९७ ॥ 'धन्वंतरी' क्षीरफला सोमसृष्टा च पीतिका । तत स्थिरफला चैव सोमका स्वसृता तथा ॥ ९८ ॥ महत्फला पुष्पफला तथैव सोमयष्टिका । गुडयोगफला चैव प्रोक्ता कर्कारुस्तथा ॥ ९९ ॥ राजकर्कटीनाम्नी च 'कैयदेवनिघंटके' । कूष्मांडकी कर्कोरी च 'द्रव्यरत्ने'

[illegible]फला ॥ २००० ॥ 'भावप्रकाशे' संप्रोक्तं कूष्मांडं कविभिर्ध्रुवं ।
[illegible] । 'राजनिघंटे' । मूत्राघातहरं प्रमेहशमनं कृच्छ्राश्मरीच्छेदनं विण्मूत्र-
[illegible] तृषार्तिशमनं जीर्णांगपुष्टिप्रदं । वृष्यं स्वादुतरं स्वरोचकहरं बल्यं
[illegible] पित्तापहं कूष्मांडं प्रवरं वदंति भिषजो वल्लीफलानां पुनः ॥ १ ॥ वा-
[illegible] हृद्यं बस्तिशुद्धिकरं तथा ॥ २ ॥ चित्तविकारनुत् प्रोक्तं 'धन्वं-
[illegible]निघंटके । कफवातहरं रूक्षं संप्रोक्तं 'कैयदेवके' ॥ ३ ॥ 'मदने'
[illegible] वातहरकविभिः स्मृतं । ८० गोरक्षतुंबी । म० थोर वाटोळा
[illegible] भोपळा । गु० गोरखदुधी । गोरक्षतुंबी गोरक्षी तवालाबुर्घटाभिधा ॥
॥ ४ ॥ कुंभालाबुर्घटालाबुः कुंभतुंबी तु 'राजके' । गुणाः । गोरक्षतुंबी
मधुरा शिशिरा पित्तहा गुरुः ॥ ५ ॥ रुच्या संतर्पणी बल्या वीर्यदा
पुष्टिदा 'नृपे' । ८१ दुग्धतुंबी । म० दुध्या भोपळा । गु० दुधियुं ।
दुग्धतुंबी क्षीरतुंबी दीर्घवृत्तफलाभिधा ॥ ६ ॥ इक्ष्वाकुः क्षत्रियवरा दीर्घ-
बीजा महाफला । क्षीरिणी दुग्धबीजा च दंतबीजा पयस्विनी ॥ ७ ॥
महावल्ली महातुंबी हालाबुश्च श्रमभिका । प्रोक्ता 'राजनिघंटे' तु वैद्य-
विद्याविशारदैः ॥ ८ ॥ राजालाबु रसालाबुर्मधुरालाबुनी तथा । शाक-
लाबुस्तुंबकश्च महालाबुस्तु 'कैयके' ॥ ९ ॥ अलाबुनी वृत्ततुंबी 'द्रव्ये'
चालाबुका स्मृता । 'गणे' तुंबिस्तथा तुंबी मिष्टा 'मदनपालके' ॥ १० ॥
गुणाः । तुंबी सुमधुरा स्निग्धा पित्तघ्नी गर्भपोषकृत् । वृष्या धातप्रदा चैव
बलपुष्टिकरा 'नृपे' ॥ ११ ॥ 'धन्वंतरौ' शीतला च 'कैये' विष्टंभ-
कारका । कफपित्तहरा प्रोक्ता पुराणभिषग्वरैः ॥ १२ ॥ ८२ भूतुंबी ।
म० नागतुंबी, भूतुंबी । गु० पातालतुंबडी । भूतुंबी नागतुंबी च नाकच्च-
समुद्भवा । वल्मीकसंभवा देवी दिव्यतुंबी तु 'राजके' ॥ १३ ॥
गुणाः । भूतुंबी कटु कोष्णा च सन्निपातापहारिणी । दंतालोला दंतरोगघ्नद्-
वातहरा 'नृपे' ॥ १४ ॥ ८३ कलिंग । म० कालिंगड, टरबूज । गु०
तडबूच, कालिंगड । ततो मांसफलश्चैव कलिंगश्चित्रवल्लिकः । वृत्तफलो
मांसलश्च चित्रो मधुफलस्तथा ॥ १५ ॥ घृणफलश्च संप्रोक्तो 'राज-
नामनिघंटके' । कलिंदकं तु कालिंगं कृष्णबीजं तु 'कैयके' ॥ १६ ॥

हरितं मर्तुलफलं 'द्रव्यरत्नाकरे' स्मृत । सुवर्तुलं तु कालिंदं स्मृतं" भावप्रकाशके' ॥१७॥ गुणाः । कलिंगो मधुरः शीत पित्तदाहश्रमापह । वृष्य सतर्पणो बल्यो वीर्यपुष्टिकरो'' नृपे '॥१८॥ ग्राही च गुरुविष्टंभी ह्यभिष्यंदकरो ध्रुवः। शुक्रनुत् पित्तहच्चैव कफवातकर तथा ॥ १९ ॥ पक्व तु शीतमुष्ण स्यात् ' केये ' प्र कफवातहृत् ।८४ धाराकोशातकी । म० 'दोडका, शिराळें। गु० तुरीया, घिसोडा । कोशातकी स्वादुफला सुपुष्पा तदनतर ॥ २० ॥ कर्कोटकी पीतपुष्पा तथा धाराफला स्मृता । धामार्गवो दीर्घफला सुकोशा ' राजनामके ' ॥ २१ ॥ ' धन्वतरिनिघंटे ' तु जालिनी कृतवेधना । गुणाः । धाराकोशातकी स्निग्धा मधुरा कफपित्तनुत् ॥२२॥ ईषद्वातकरी पथ्या रुचिकृद्बलवीर्यदा । 'नृपे' 'धन्वतरौ' चैव पक्वामाशयशोधनी ॥ २३ ॥ पित्तघ्नी रोपनी श्वासकासज्वरकृमिघ्निका । वातला कफपित्तघ्ना ' केयदेवे ' प्रकीर्तिता ॥ २४ ॥ शोफपाडूदरप्लीह कुष्ठार्श कफपित्तहा । तत्फल भेदन शीत लघु मेहत्रिदोषहृत् ॥ २५ ॥ प्रोक्त 'मदनपाले' तु वैद्यविद्याविशारदैः । ८५ हस्तिकोशातकी । म० घोसाळें, पारसा दोडका । हस्तिकोशातकी चैव बृहत्कोशातकी तथा ॥ २६ ॥ महाकोशातकी वृत्ता ग्राम्यकोशातकी ' नृपे ' । धामार्गवः कोशफला राजकोशातकी तथा ॥ २७ ॥ कर्कोटकी पीतपुष्पा महाजालीति ' धन्वके '। हस्तिघोषा ' केयदेवे ' ' मदने ' राजिमत्फला ॥ २८ ॥ घोषका हस्तिपर्णश्च ' भावे ' प्रोक्ता महाफला । गुणाः । हस्तिकोशातकी स्निग्धा मधुराऽऽध्मानवातकृत् ॥ २९ ॥ वृष्या कृमिकरी चैव व्रणसरोपणी ' नृपे ' । ज्वरान्ते हितकृ ' द्रव्ये ' ' केये ' तु गुरुश्लेष्मका ॥ ३० ॥ ' द्रव्ये ' वातहरा प्रोक्ता ' मदे ' शीता प्रकीर्तिता । पित्तघ्नी दीपनी श्वासज्वरघ्नी प्रोच्यते बुधै ॥ ३१ ॥ ८६ स्वादुपटोली । म. पडवळ । गु. मीठा पटोल । तत स्वादुपटोली तु पटोली मंडली तथा । मधुरा तु पटोली स्यात्प्रोक्ता दीर्घपटोलिका ॥ ॥ ३२ ॥ स्निग्धपर्णी 'नृपे' चैव तथा स्वादुपटोलिका । पाडुको राजमान्यश्च ज्योत्स्नाभारी तथैव च ॥ ३३ ॥ ततो राजपटोली स समोक्ता

'कैयदेवके' । चिर्चुटो वेश्मकूलश्च श्वेतराजी बृहत्फला ॥ ३४ ॥ प्रोक्ता 'मदनपाले' तु 'भावे' च गृहकूलक । चिचिंडश्च सुदीर्घश्च प्रोक्तो वैद्यविशारदै ॥ ३५ ॥ गुणाः ॥ पटोली स्वादु पित्तघ्नी रुचिकृज्ज्वरनाशनी । बलपुष्टिकरी पथ्या दीपनी पाचनी 'नृपे' ॥ ३६ ॥ 'पटोलपत्र पित्तघ्नं नालं तस्य कफापहं । फलं त्रिदोषशमन मूलं चास्य विरेचन ॥ ३७ ॥ प्रोक्त 'राजनिघंटे' तु त्रिदोषघ्नी तु 'धन्वके' । 'कैये' हृद्यं सरं चोष्णं कफपित्तहरं ध्रुवं ॥ ३८ ॥ कटुत्वाहतृपाघ्नं च स्फोटकुष्ठ ज्वरानिलाजित् ' ॥ ८७ दधिपुष्पी । म गोंडी कुहिरी । गु. अदवेल्य, कागबेलिया । दधिपुष्पी तु खट्वांगी वृषा पर्यंकपादिका ॥ ३९ ॥ खट्वापादी तु मल्या च काकाडी कोलपादिका । खट्वा चैव तथा प्रोक्ता 'राजनामनिघंटके' ॥ ४० ॥ 'द्रव्ये' कृष्णफला चैव काकाडोला त्रिपर्णिका । 'कैयदेवे' कोलशिंबी तथा सूक्ष्मपादिका ॥ ४१ ॥ गुणाः । खट्वांगी मधुरा कट्वी शीता सतापपित्तहा । गुर्वी वातकरी रुच्या 'राजनामनिघंटके' ॥ ४२ ॥ वातपित्तहरा 'द्रव्ये' 'भावे' चोष्णानिलापहा । कफपित्तहरा चैव शुक्राग्निबलवि‍द्धरी ॥ ४३ ॥ ८८ खड्गशिंबी । म तरसवळ । को. कोयते वाल । टे. अवई । गु. परवोलिया, तरवारडी । असिशिंबी खड्गशिंबी शिंबी निस्त्रिंशशिंबिका । स्थूलशिंबी बृहच्छिंबी महाशिंबी मुशिंबिका ॥ ४४ ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यविद्याविशारदे' । कुरसवल्ली कुरसशिंबी कुरसा पुत्तकशिंबिका ॥४५॥ पुत्तकाम्या पुत्तशिंबी कुशिंबी 'कैयदेवके' । खङ्गा मूदपादी च शारदी नीलपुष्पिका ॥ ४६ ॥ 'द्रव्यरत्नाकरे' चैव समोक्ता वैद्यनायकै । शिंबि शिंबी तथा 'भावे' सम्प्रोक्ता वैद्यनायकै ॥ ४७ ॥ गुणाः । असिशिंबी तु मधुरा कषाया श्लेष्मपित्तजित् । अगदोषहरा शीता रुचिकृद्दीपनी 'नृपे' ॥ ४८ ॥ वातश्लेष्महरा बल्या श्लेष्मला दाहनाशिनी । 'कैये' प्रोक्ता तथा 'द्रव्ये' कफवातहरा ध्रुव ॥ ४९ ॥ ८९ कारवल्ली । म कारली । गु० कारेला । करका कारवल्ली च चौरिपत्र वरिल्लका । सूक्ष्मवल्ली [illegible] पीतपुष्पोऽड्डुकाल्लिका ॥५०॥ प्रोक्ता 'राजनिघंटे' तु वैद्यविद्याविशारदै ।

तथा 'शिवनिघण्टे' तु मण्डपी चिरितच्छदा ॥ ९१ ॥ सुकुमारी तु सुपवी तोयवल्यफलाऽखिली । 'कैयदेवे' तु समोक्ता वैद्यशास्त्रज्ञपण्डितैः ॥९२॥ कारेल्ल कारवेल्ल तु 'द्रव्यनामनिघण्टके' । फलारिमका राजवल्ली 'गणनामनिघण्टके' ॥ ९३ ॥ गुणाः । कारवल्ली सुतिक्तोष्णा दीपनी कफवातजित् । अरोचकहरा चैव रक्तदोषहरा 'नृपे' ॥ ९४ ॥ 'मदे' तु कामलाघ्नी च 'कैये' वातहरा 'ध्रुव' । अपथ्या रक्तपित्तघ्नी कृमिपाण्डुव्रणापहा ॥ ९५ ॥ कासश्वासप्रमेहघ्नी कुष्ठाध्मज्वरनाशिनी । ९० कर्कोटकी । म० कर्टोली । गु० कथेला । कर्कोटकी स्वादुफला मनोज्ञा च मनस्विनी ॥ ९६ ॥ बोधना चैव कर्कोटी देवी कटफला 'नृपे' । विषप्रशमनी चैव कुमारी 'धन्वनामके' ॥ ९७ ॥ पीतपुष्पा तथा जाली प्रोक्ता 'मदनपालके' । गुणाः । कर्कोटी कटु तिक्तोष्णा विषघ्नी वातहारिणी ॥ ९८ ॥ दीपनी रोचनी चैव पित्तहृत् 'राजनामके' । श्लेष्महृत् विषदद्रुघ्नी कटशीर्षरुजापहा ॥ ९९ ॥ प्रोक्ता 'धन्वनिघण्टे' तु 'कैये' किलासचित्रहृत् । 'मदे' हृल्लासहृत् 'भावे' श्वासकासज्वरापहा ॥ ६० ॥ ९१ स्वादुतुंडिका । म० गोड तोंडली । गु० घाला मिठा । स्वादुतुंडी रक्तफला तुंडी मधुरबिंबिका । रुचिरफलोष्णफला पीलुपर्णी तथा स्मृता ॥ ६१ ॥ मधुबिंबी 'नृपे' चैव प्रोक्ता वैद्यविशारदैः । तुंडिकेरिफला बिंबी ओष्ठोपमफला तथा ॥ ६२ ॥ गोरुहा च तुंडिका चैव 'धन्वंतरिनिघण्टे' । ओष्ठभा तु चोष्ठफला धीहरा 'द्रव्यनामके' ॥ ६३॥ 'मदे' दतच्छदा चैव रक्तपीतफला 'गणे' । 'कैये' तु विद्रुमफला तथा च तुंडिकेरिका ॥ ६४ ॥ तथा विद्रुमवाक् चैव प्रोक्ता वैद्यविशारदैः । 'शोढले' तु तथा प्रोक्ता छर्दिन्योष्ठी च बिंबिका ॥ ६५ ॥ गुणाः । बिंबी तु मधुरा शीता पित्तश्वासकफापहा । अमृग्ज्वरहरा रम्या कासजि 'द्राजनामके' ॥ ६६ ॥ वातुला श्लेष्मला चैव क्षयश्वयथु नाशनी । सग्राही कामलाहन्त्री पाके च कटुका 'ध्रुव' ॥ ६७ ॥ रक्तपित्तहरा चैव वाताध्मादिविनाशकृत् । 'कैयदेवे' भिषक्श्रेष्ठैः कथिता नैव संशयः ॥ ६८ ॥ 'धन्वे' तु रक्तपित्तघ्नी शोफपाण्डुहरा ध्रुव । तरुक्त

बुद्धिद्धप्रोक्तं स्तन्यवृद्धिकरं तथा ॥ ६९ ॥ मूलं तु वीर्यदं शीतं मेहहृत्
'द्रव्यरत्नके'। 'मदे' भ्रांतिहरं प्रोक्तं 'गणे' वमनहारकं ॥ ७०
९१ निष्पावी । म० थोर वेवडा । गु० वालोल, पांदडी । निष्पावी
भेदाः । निष्पाविका पंचधा स्यात् श्वेता कृष्णा च पीतिका । लघ्वी च
बृहती चैव गुणैस्तुल्या प्रकीर्तिता ॥ ७१ ॥ तथा 'राजनिघंटे' तु
चतुर्धा परिकीर्तिता । निष्पावी ग्रामजादिः स्यात्फलिनी नखपूर्विका ७२
॥ मेढषी फलिका शिवी ज्ञेया गुच्छफला च सा । विशालफलिका चैव
निष्पाविश्चिपिटा तथा ॥ ७३ ॥ 'द्रव्यरत्नाकरे' चैव नलिका परिकी-
र्तिता । ९३ नखनिष्पाविका म० लघु वेवडा । गु० नहानी वालोल ।
अपांगलीफला चैव नखनिष्पाविका तथा ॥ ७४ ॥ वृत्तनिष्पाविका प्रा-
क्ता नखगुच्छफला 'नृपे' । गुणाः । निष्पावौ द्वौ हरिच्छुभ्रौ कषायौ
मधुरौ सरौ ॥ ७५ ॥ कंठशुद्धिकरौ मेध्यौ दीपनौ रुचिकारकौ । संग्राहि
समवीर्यः स्यादीपच्छ्रेष्ठो द्वितीयकः ॥ ७६ ॥ प्रोक्तौ 'राजनिघंटे' तु
कफपित्तहरौ 'द्रवे' । ९४ वार्ताकी । म० वांगे । गु० रिंगणा । वार्ताकी
कंटवृंताकी कंटालु कंटपत्रिका ॥ ७७ ॥ निद्रालुर्मांसलफला वृंताकी
च महोटिका । चित्रफला कंटकिनी महती कट्फला तथा ॥
॥ ७८ ॥ मिश्रवर्णफला नीलफला रक्तफला च सा । शाकश्रेष्ठा
वृत्तफला नृपप्रियफला 'नृपे' ॥ ७९ ॥ भंटाकी वार्तिका वृंता भंटिका
'धन्वनामके'। 'कैयदेवनिघंटे' तु कथिता चोरभंटिका ॥ ८० ॥
वार्ताकिनी तु निद्रालु कथिता नीरकंटका । महापथ्या पथ्यतमा बहुवीर्या
रसोत्तमा ॥ ८१ ॥ वैद्यविद्याप्रवीणैस्तु संप्रोक्ता 'धन्वनामके'। गुणाः।
वार्ताकी कटुका रुच्या मधुरा पित्तनाशनी ॥ ८२ ॥ वपुःपुष्टिकरी हृद्या
गुरुर्वातकरा 'नृपे'। स्वादूष्णं च तथा तीक्ष्णं पाके तु कटु दीपनं ॥ ८३॥
शुक्लं कफवातघ्नं वृंताकं 'धन्वनामके'। ज्वरकासारुचिहरं पक्वं स्यात्पि-
त्तकारकं ॥ ८४ ॥ बालं पित्तकफघ्नं च 'कैये' प्रोक्तं भिषग्जनैः । वृंताकं
वितलं विनिद्रंगारपरिपाचितं ॥ ८५ ॥ कफमेदोनिलामघ्नमत्यर्थं लघु
दीपनं । तदेव हि गुरु स्निग्धं सतैलं लवणान्वितं ॥ ८६ ॥ प्रोक्तं 'भाव-

प्रकाशें ' तु वैद्यविद्याविशारदैः । ९५ डंगरी । म. तांबडा भोंपळा, डांगर।। गु०ः पतकालु । डंगरी डांगरी चैव दीर्घोवारुश्च डंगरि. ॥ ८७ डंगारी नागशुंडी च गजदंतफला ' नृपे ' । कूष्मांडिकी पीतपुष्पा ग्राम्या पीतफला तथा ॥ ७८ ॥ गुडयोगफला चैव प्रोक्ता ' शिवनिघंटके ' । गुणा । डुंगरी शीतला रुच्या दाहपित्तास्रदोषजित् ॥ शोषहृत्तर्पणी गौल्या जाड्यहा मूत्ररोधनुत् । प्रोक्ता ' राजनिघंटे ' तु वैद्यविद्याविशारदैः ॥ ९ ॥ ९६ पड्भुजा । म० खरबूज । गु० खरबूज । षट्भुजा तु मधुफला पट्रेखा वृत्तकर्कटी । तिक्ता तिक्तफला चैव मधुपाका च पड्भुजा ॥ ९१ ॥ वृतेर्वारुश्च संप्रोक्ता ' राजनामनिघंटके ' । खर्बुजं फलराजं स्यादमृताव्हं दशांगुलं ॥ ९२ ॥ प्रोक्तं ' मदनपाले ' तु वैद्यविद्याविशारदैः । गुणाः । खर्बुजं तर्पणं वृष्यं पुष्टिदं श्रमदाहहृत् ॥ ९३ ॥ मूत्रशुद्धिकरं चैव विषपित्तहरं तथा । उन्मादापहरं वीर्यवृद्धिदं कफदं ' नृपे ' ॥ ९४ ॥ कोष्ठशुद्धिकरं बल्यं गुरुरिनग्धं च स्वादुकं । शीतं पित्तानिलहरं प्रोक्तं ' मदनपालके ' ॥ ९५ ॥ ९७ कर्कटी । म० काकडी । गु० काकडी । कर्कटी तु कटुदरा तथा छर्दायनी स्मृता । मूत्रफला पीतसा च त्रपुसी हस्तिपर्णिका ॥ ९६ ॥ मूत्रला लोमशाकाडा बहुकंदा तथा ' नृपे ' । दीपनी स्फोटिनी चैव ततोन्नविवर्द्धनी ॥ ९७ ॥ ' धन्वंतरिनिघंटे ' तु शाकटा गजकर्णिका । एर्वारुश्च तथा प्रोक्ता ऊर्वारुः ' कैयदेवके ' ॥ ९८ ॥ गुणा. । कर्कटी मधुरा शीता कफपित्तहरा ध्रुवं । रक्तदोषहरा पक्वा बहुमूत्रकरी तथा ॥ ९९ ॥ मूत्ररोधाश्मरी हंत्री पित्तवातिहरा ध्रुवं । दाहश्लेष्महरा रुच्या ' प्रोक्ता ' राजनिघंटके ' ॥ २१०० ॥ पक्वा स्यात्पित्तकारी च वन्हिदा तृट्विनाशनी । श्रमदाहहरा प्रोक्ता ' कैयदेवनिघंटके ' ॥ १ ॥ ९८ त्रपुसी । म० तवसें । गु. खीरा काकडी । त्रपुसी तुंदिलफला तथा त्रपुसकर्कटी । बहुफला कोशफला कंटालुस्तदनंतर ॥ २ ॥ पीतपुष्पी तथा प्रोक्ता ' राजनामनिघंटके ' । त्रपुसं कटुकं चैव विषादुर्हस्तिपर्णिनी ॥ ३ ॥ छर्दायनी मूत्रफला तर्कारी पटुका ' घने ' । मूत्रला कंटला चैव ' कैयदेवनिघंटके ' ॥ ४ ॥ गुणा. ।

त्रपुसी मधुरा रुच्या शिशिरा श्रमहा गुरुः। पित्तदाहहरा चैव वांतिहृत् मूत्रप्रदा 'नृपे'॥ ५॥ मूत्रबस्तिशोधनिका कफपित्तासनाशनी। मूत्रकृच्छ्रविबंधघ्नी 'धन्वंतरिनिघंटके'॥ ६॥ कफवातकरा चैव 'द्रव्ये' प्रोक्ता भिषक्वरैः। ९९ एर्वारु। म० मळ्यांतील वाळुक, थोर वाळुक। गु० मोठी कांकडी। एर्वारुः कर्कटी प्रोक्ता व्यालपत्रा च लोमशा॥ ७॥ स्थूला तोयच्छदा चैव हस्तिदंतफला 'नृपे'। 'धन्वंतरौ' तु कविभिरुर्वारुः परिकीर्तिता॥ ८॥ मूत्रफलं वालुकं च मालंबं 'केयदेवके'। गुणाः। उर्वारुकं पित्तहरं शीतलं मूत्ररोगहृत्॥ ९॥ मधुरं रुचिदं चैव मूर्छासंतापहारकं। वातकोपकरं प्रोक्तं वैद्यै 'राजनिघंटके'॥ १०॥ भेदी विष्टंभकारी च त्वभिष्यंदी च मूत्रलं। रक्तपित्तहरं चैव पक्वं स्यात्कफहारकं॥ ११॥ हृद्यं दीपनमित्युक्तं 'केयदेवनिघंटके'। १००वालुकी। म० शेतांतील लहान वाळुक। गु० वालुक काकडी। वालुकी तु बहुफला संप्रोक्ता क्षेत्रकर्कटी॥ १२॥ तथा च मधुरफला सुदैर्वारुस्तथा मता। स्निग्धफला क्षेत्ररुहा कथिता पीतपुष्पका॥ १३॥ शारदिका तथा ख्याता 'राजनामनिघंटके'। गुणाः। वालुकी मधुरा शीता हृद्या ग्लानश्रमापहा॥ १४॥ कासपीनसकारी च पित्तहा रुचिदा 'नृपे'। १०१ चिर्भिटा। म० शेंदाड, चिभूड। गु० चिमडा। चिर्भिटा रोचनफला सुचित्रा क्षेत्रचिर्भिटा॥ १५॥ चिर्भिटिका पांडुफला पथ्या चित्रफला मता। कर्कटी तु तथा प्रोक्ता 'राजनामनिघंटके'॥ १६॥ गोरक्षकर्कटी॥ १७॥ 'धन्वे' तु चिर्भटं चैव प्रोक्तं वैद्यविशारदैः। गुणाः। चैव गोदुग्धं चिर्भिटी 'केयदेवके'। धेनुदुग्धं 'द्रव्यरत्ने' तथा गोरक्ष-बाल्ये तिक्ता चिर्भिटा किंचिदम्ला गौल्योपेता दीपनी सा च पाके। शुष्का रूक्षा श्लेष्मवातारुचिघ्नी जाड्यघ्नी वै रोचनी दीपनी च॥ १८॥ प्रोक्ता 'राजनिघंटे' तु वैद्यशास्त्रज्ञपंडितैः॥ १९॥ मेदिनी कृमिकंडुघ्नी ज्वरहा 'गणनामके'। रूक्षा गुरुः शीतला च ग्राही विष्टंभकारिणी॥ २०॥ वातप्रकोपना चैव कफपित्तविनाशिनी। अभिष्यंदी तथा 'केये' पक्वमुष्णं तु पित्तलं॥ २१॥ १०२ मृगाक्षी। म० शेंदणी। गु०

गोठमडी, कोठींबा । मृगाक्षी श्वेतपुष्पा च मृगेर्वारुर्मृगादनी । चित्रवल्ली बहुफला कपिलाक्षी मृगेक्षणा ॥ २२ ॥ चित्रा चित्रफला पथ्या विचित्रा मृगचिर्भिटा । मरुजा कुंभसी देवी कटूफला लघुचिर्भिटा ॥ २३ ॥ संदिनी च महादेवी 'राजनामनिघंटके' । मुखवास 'शीर्णवृत्तं विचित्रं पांडुरं तथा ॥ २४ ॥ विचित्रकं चित्रफलं 'केयदेवनिघंटके' । तथा 'मदनपाले' तु संप्रोक्त पीतवर्णकं ॥ २५ ॥ गुणाः । मृगाक्षी कटुका तिक्ता पाकेम्ला वातनाशनी । पित्तकृत्पीनसहरा दीपनी रुचिदा 'नृपे' ॥ २६ ॥ 'केये' तु शीतला प्रोक्ता वन्हिकृत् 'मदने' स्मृता । १०३ चीना कर्कटिका । म० टरकांकडी । गु० पंडोरा । चीनाकर्कटिका ज्ञेया बीजकर्कटिका तथा ॥ २७ ॥ सुदीर्घा राजिकफला 'नृपे' कुलकर्कटी । चीनाकं चीनकं चीना 'केयदेवनिघंटके' ॥२८॥ गुणाः । चीना कर्कटिका रुच्या शिशिरा पित्तनाशनी । मधुरा तृप्तिदा हृद्या दाहशोषहरा 'नृपे' ॥ २९ ॥ 'केये' तु वातकफकृत्प्रोक्ता वैद्यविचक्षणैः । १०४ शशांडुली । शशाण्डुली बहुफला तंडुली क्षेत्रसंभवा ॥ ३० ॥ क्षुद्राऽम्ला लोमशफला धूम्रवृत्तफला 'नृपे' । गुणाः । शशांडुली तिक्तकटुः कटूम्ला कफनाशनी ॥ ३१ ॥ पाकेम्ला दीपनी रुच्या जरठा मधुरा तथा । विदाहीति भिषक्श्रेष्ठैः प्रोक्ता 'राजनिघंटके' ॥ ३२ ॥ १०५ कटुतुंबी । म० कडवची । कटुतुंबी श्रीफलिका प्रतिपत्रफला तथा । सुपवी कारवी चैव तद्वद्बहुफला तथा ॥ ३३ ॥ क्षुद्रकारलिका प्रोक्ता ज्ञेया पंदलता तथा । क्षुद्रादिकारवल्ली च प्रोक्ता 'राजनिघंटके' ॥ ३४ ॥ 'द्रव्ये' लघुलता चैव मगधी कृष्णमृद्भवा । गुणाः । कटुतुंबी कटुतिक्ता रक्तवातकरी तथा ॥ ३५ ॥ रोचनी दीपनी पथ्या 'राजनामनिघंटके' । १०६ क्षुद्रकारलीकंद । म० गु० कडवचीकंद । गुणाः । कारवीकंदमत्यंत मलरोधविनोदनं ॥ २१३६ ॥ योनिनिर्गतदोषघ्नं गर्भस्रावविपापहम् ।

## ६ शाल्मल्यादिवर्ग.

१ शाल्मली । म० काटे सावर । गु० शेमळो । शाल्मलिश्चिरजीवी

स्यारिपिच्छिलो रक्तपुष्पकः ॥ २१३७ ॥ कुक्कुटी तूलवृक्षश्च मोचाख्यः कटकद्रुमः । रक्तोत्पलो रम्यपुष्पो बहुवीर्यो यमद्रुमः ॥ ३८ ॥ दीर्घद्रुमः स्थूलफलो दीर्घायुः 'राजनामके' । पिच्छिला तूलिनी मोचा कटकाख्या पूरणी ॥ ३९ ॥ बहुवीर्या तूलफला निस्सारा दीर्घपादपा । दुरारोहा रम्यपुष्पा रोचना च यमद्रुमा ॥ ४० ॥ शाल्मली रक्तपुष्पा च 'धन्वन्तरौ' तु चिरजीविका । पिच्छा याम्यद्रुमश्चैव पूरणी स्थिरजीविका ॥ ४१ ॥ रक्तपुष्पी तथा मोचा 'केयदेवनिघंटके' । तूलिनी कुक्कुटी चैव तथैव चिरजीविनी ॥ ४२ ॥ मोचा 'मदनपाले' तु भिषक्विद्याविशारदैः । रक्तशाल्मलिका 'द्रव्ये' स्थिरायुः 'भावनामके' ॥ ४३ ॥ तथा 'गणनिघंटे' तु कुक्कुमा स्थूलजीविका । गुणाः । शाल्मलिः पिच्छिलो वृष्यो बल्यो मधुरशीतलः ॥ ४४ ॥ कषायश्च लघुः स्निग्धः शुक्रश्लेष्मविवर्द्धनः । तद्रसस्तद्गुणो ग्राही कषायः कफनाशनः ॥ ४५ ॥ पुष्पं तद्वत्त निर्दिष्टं फलं तस्य तथाविधं । प्रोक्तं 'राजनिघंटे' तु वैद्यविद्याविशारदैः ॥ ४६ ॥ रसायनवरा चैव बृंहणी रक्तपित्तजित् । तत्फलं ग्राहि पित्तघ्नं प्रोक्तं 'मदनपालके' ॥ ४७ ॥ तत्पुष्पं कफपित्तघ्नं वातलं 'केयदेवके' । 'गणे' तु योनिदोषघ्नं समीक्ष्य वैद्यनायकैः ॥ ४८ ॥ २ मोचरस । म० सावरीचा डिंक । गु० शेमळानो गुंद । मोचो मोचरसो मोचसारः शाल्मलिवेष्टकः । सुरसः पिच्छलसारो मोचानिर्यास इत्यपि ॥ ४९ ॥ मोचस्रावस्तथा प्रोक्तो 'राजनामनिघंटके' । निर्यासः शाल्मलेः पिच्छरतथा शाल्मल इत्यपि ॥ ५० ॥ तथा वेश्मरसश्चैव 'धन्वनामनिघंटके' । मोचक 'केयदेवे' तु वेष्टको 'द्रव्यनामके' ॥ ५१ ॥ मोचस्रावी तथा पिच्छा मोचा 'मदनपालके' । पिच्छलश्च तथा प्रोक्तो 'गणनामनिघंटके' ॥ ५२ ॥ गुणाः । अथ मोचरस प्रोक्तः कषायः कफवातहा । बलप्रदावर्णवीर्यपुष्टिमेद्धिमदायकः ॥ ५३ ॥ आपुर्यद्धिकरो ग्राही प्रोक्तो 'राजनिघंटे' । प्रवाहिकातिसारघ्नो स्निग्धो दाहविनाशनः ॥ ॥५४॥ कफपित्तहरः प्रोक्तो 'केयदेवनिघंटके' । 'मदने' रक्तपित्तघ्नो दाहहा परिकीर्तितः ॥५५ ॥ ३ रक्तरोहितक । म० रक्तरोहिडा ।

गु० रगतरोहिडो । रोहीतको रोहितक रोहितश्च कुशाल्मलिः । सदाप्रसूनश्च कूटशाल्मलिश्च विरोचनः ॥ ५६ ॥ शाल्मलिको 'नृपे' प्रोक्ता तथा दाडिमपुष्पकः । रोचनश्च तथा रोही 'धन्वंतरिनिघंटके' ॥ ५७ ॥ दाडिमपत्रः प्लीहघ्नो रोहिणो 'गणनामके' । तत-'स्त्वमरकोशे' तु प्लीहशत्रुः स्मृतो बुधैः ॥ ५८ ॥ रक्तस्तु रक्तपुष्पश्च रक्तघः पारिजातकः । 'कैयदेवनिघंटे' तु प्रोक्तो वैद्यविशारदैः ॥ ५९ ॥ ४ श्वेतरोहितक । म० श्वेत रोहिडा । गु० धोळो रोहिडो । 'नृपे' तु श्वेतरोहीतः सितपुष्पः सिताव्हयः । सितांगः शुक्लरोहीतो लक्ष्मीवाञ्जनवल्लभः ॥ ६० ॥ गुणाः । 'नृपे' रोहीतकद्वंद्वं कटु स्निग्धं कषायकं । शीतलं क्रुमिप्लीहघ्नं व्रणरक्ताक्षिरोगहं ॥ ६१ ॥ 'धन्वे' प्रोक्तो यकृद्वा च तथा 'कैयनिघंटके' । सरो वातकफघ्नश्च चोष्णो गुल्मविषापहः ॥ ६२ ॥ मेदोविबंधानाहघ्नो कर्णशूलविनाशनः । ५ एकवीर । म० एकवीर, कांटे असाणा । गु० एकवीर, एकलकंटो । एकवीरो महावीरः सकृद्वीरः सुवीरकः ॥ ६३ ॥ एकादिवीरपर्यायैर्वीरः प्रोक्तो 'नृपे' तथा । गुणाः । एकवीरो भवेच्चोष्णः कटुकस्तोदवातनुत् ॥ ६४ ॥ गृध्रसीकटिपृष्ठादिशूलपक्षाभिघातनुत् । ६ पारिभद्र । म० पांगारा । गु० पाडेरवो । पारिभद्रो निंबतरुर्मंदारः पारिजातकः ॥ ६५ ॥ बहुपुष्पो रक्तपुष्पः क्रुमिघ्नो रक्तकेसरः । 'नृपे' प्रोक्तो तथा 'कैये' प्रभद्रः कंटकीशुकः ॥ ६६ ॥ पारिजातः कंटकी च कंटकीपारिजातकः । गुणाः । पारिभद्रः कटूष्णश्च कफवातविनाशनः ॥ ६७ ॥ रोचनो दीपनः पथ्यो प्रोक्तो 'राजनिघंटके' । शोफपांडुक्रिमिहरो मेदोहा 'मदने' तथा ॥ ६८ ॥ पुष्पं तु पित्तरोगघ्नं कर्णव्याधिविनाशनं । 'भावे' तु पूर्वमुक्तं स्याद्'गणे' च प्रणशोथजित् ॥ ६९ ॥ कफपित्तहरं चैव संप्रोक्तं वैद्यनायकैः । ७ खदिर । म० खैर । खदिरो बाल्पपत्रश्च साद (ल्प) पत्री सततक्षमः ॥ ७० ॥ मुरालयो वक्रकंटश्च यज्ञांगो दंतधावनः । गायत्री जिह्मशल्यश्च कंटीसारद्रुमस्तपा ॥ ७१ ॥ कुष्ठारिर्बहुसारश्च मेध्यश्च 'नृपनामके' । 'के-

धदेवे ' तु गीतश्च कुष्ठघ्न. कुष्ठकंटकः ॥ ७२ ॥ ' कोशे ' तु बालत-
न्यस्तथा च दंतधावनः । गुणाः । सामान्यखदिरश्चैव रसे तिक्तस्तु शीत-
लः ॥ ७३ ॥ पित्तादिकफकुष्ठघ्नो पाचनः कासशोफहा । ८ श्वेतख-
दिर । म० पांढरा खैर । गु० धोळा खेर । खदिरः श्वेतसारश्च का-
र्मुक. कुब्जकंटक ॥ ७४ ॥ सोमसारो नेमिवृक्षः सोमवल्कः पथिद्रुमः ।
प्रोक्तो ' राजनिघंटे ' तु वैद्यशास्त्रविशारदैः ॥ ७५ ॥ सारशल्यस्तथा
प्रोक्तो ' केयदेवनिघंटके ' । गुणाः । ततस्तु श्वेतखदिरस्तिक्तः काषाय-
कः कटु ॥ ७६ ॥ चोष्णः कंडूकुष्ठहरः कफवातविनाशनः । व्रणापहे-
ति संप्रोक्तो ' राजनामनिघंटके ' ॥ ७७ ॥ शीतपित्तकफघ्नश्च रक्तदो-
षहरो ' घने ' । शीतः कफादिपित्तघ्नो श्वित्रकुष्ठकृमिघ्नकः ॥ ७८ ॥
शोथप्रमेहमेदोघ्नः कासारुचिविनिघ्नकः । पाडुहा ' केयदेवे ' च संप्रो-
क्तो वैद्यनायकैः ॥ ७९ ॥ मेहशोथामपित्तासृङ्नाशनो ' मदने ' स्मृ-
तः । ९ रक्तखैर । म० तांबडा खैर । गु० राता खेर । रक्तसारस्तु
रक्तश्च सुसारस्ताम्रकंटकः ॥ ८० ॥ संप्रोक्तो बहुशल्यश्च याज्ञिकः
कुष्ठनोदनः । यूपद्रुमोऽस्खदिरोऽप्यरुश्च ' राजनामके ' ॥ ८१ ॥ गुणाः ।
कटूष्णो रक्तखदिरः कषायो गुरुतिक्तकः । आमवातास्रघातघ्नो व्रण-
भूतज्वरापहः ॥८२॥ 'नृपे' प्रोक्तो तथा 'धन्वे' हिमः पित्तकफास्रहः । कुष्ठ-
कंडूकृमिघ्नश्च कफरेतविशोधकः ॥ ८३ ॥ शुक्रवृद्धिकरो ' द्रव्ये ' दाह-
ज्वरविनाशनः । तन्निर्यासगुणश्चैव मधुरो बल्यकृत्तथा ॥ ८४ ॥ वीर्यवृद्धिकर-
श्चैव मुखरोगविनाशनः । १० विट्खदिर । म० शेण्याखैर । गु० दुर्गंधखेर
। ततोविट्खदिरश्चैव कामोमी वालकप्रकः ॥ ८५ ॥ गोरटो मरनश्चैव मं-
सारो बहुसारक । पत्रतरुर्महासारः खादिरो ' राजनामके ' ॥ ८६ ॥ इरिमेदो-
रिमेदश्च प्रोक्तो 'मदनपालके' । गुणा । विट्खदिरः कटुरुष्णास्तिक्तो रक्तगो-
दषदोषहरः ॥ ८७ ॥ कंडूतिविषवीसर्पज्वरकुष्ठोन्मादभूतघ्न । ११ आरि ।
म० आराटी, वेल्याखैर । गु० सेरेन्य । आरिःसंज्ञानिरा दान्ना तथा खादिरप-
त्रिका ॥ ८८ ॥ प्रोक्ता ' राजनिघंटे ' तु वेदसंख्या भिषग्वरैः । गुणाः ।
आरिः कषायकटुका तिक्ता रक्तातिविनाशनी ॥ ८९ ॥ १२ खदिर-
सारः

सार । म० काथ । गु० काथो । खादिरः खदिरोद्भूतस्तथा खदिरसारकः । 'नृपे' खदिरनिर्यासो रंगदो रंग एव च ॥ ९० ॥ गुणाः । कटुकः खादिरः साररितकोष्णः कफवातहृत् । मगकंठामयघ्नश्च रुचिकृद्दीपनो 'नृपे' ॥ ९१ ॥ 'द्रव्यरत्ने' त्रिदोषघ्नः संप्रोक्तो वैद्यनायकैः । १३ शमी । म० शोर शमी । गु० खिजडी । शमी शांता शिवेशाना तुंगिष्टा सुरभिस्तथा ॥९२॥ कचघ्नशुक्तफला चैव शापापशमनी तथा । सुभद्रा केशमथनी लक्ष्मीः शुभकरी मता ॥ ९३ ॥ मेध्या तपनतनया हविर्गंधा तथा स्मृता । मंगल्या शंकुफलिका पापापशमनी तथा ॥ ९४ ॥ भद्रा तु शंकरी ज्ञेया केशहंत्री शिवाफला । सुपत्रा सुखदा चैव 'राजनामनिघंटके' ॥ ९५ ॥ ईशानी शंकरी चैव 'धन्वे' तु पापनाशिनी । केशहंतृफला चैव केशरुद्दफलिका तथा ॥ ९६ ॥ केशापहा शाकफला 'कैयदेवनिघंटके' । 'द्रव्ये' संवृतफला चैव शांकरी मंगलप्रदा ॥ ९७ ॥ शिंबी खदिरपत्रा च पवित्रा 'मदने' 'शिवे' । पवित्रपत्रा शमिका शुक्लफला तथा 'गणे' ॥ ९८ ॥ गुणाः । शमी रूक्षा कषाया च रक्तपित्तातिसारजित् । तत्फलं तु गुरु स्वादु तिक्तोष्णं केशरुद् 'नृपे' ॥ ९९ ॥ 'द्रव्ये' तु शीतं 'कैये' च कफकुष्ठार्शोनाशनं । श्वासकासक्रमिभ्रांतिनाशनं लघु रेचकृत् ॥ २२० ॥ १४ लघुशमी । म० । लघुशमी । गु० नहानी खिजडी । शमी शांता शुभा भद्रा जया चैवापराजिता । विजया तु 'नृपे' प्रोक्ता पूर्वोक्तगुणसंयुता ॥ १ ॥ ईशाना त्वजिता 'कैये' भूशमी 'मदने' स्मृता । तत 'स्वमरकोशे' तु शमीरः परिकीर्तितः ॥ २ ॥ १५ बब्बुल । म० बाभूळ । गु० बावल । बब्बुलो युगलाक्षश्च कंटालुस्तीक्ष्णकंटकः । गोशृंगः पंक्तिबीजश्च दीर्घकंटः कफांतकः ॥३॥ दृढबीजोजभक्षश्च बर्बुरो 'राजनामके' । किंकिराटपीतकश्च 'द्रव्ये' तु पीतपुष्पकः॥४॥किंकिराटस्तथा प्रोक्तो 'भावनामनिघंटके' । गुणाः । बब्बुलस्तु कषायोष्णः कफकासक्षयापहः ॥ ५ ॥ आमरक्तातिसारघ्नः पित्तदाहहरो 'नृपे' । 'द्रव्ये' 'मदे' शीतलश्च भेदी कुष्टगरापहः ॥ ६ ॥ १६ जालबब्बूलकः । म० लहान बाभूळ, पुळई । गु० नहानी बावळ । जालबब्बूलकश्चैव छत्राकः स्थूलकंटकः ॥ ७ ॥ सूक्ष्मशाखस्तनुच्छायो रंभ-

करस्तु 'राजके'। गुणा। जालवव्र्मूलको रूक्षो वातामयविनाशकृत्
॥ ८ ॥ पित्तकृच्च कषायोष्ण कफरद्दाहकारक। १७ अरिमेद। म०
हिंवर। गु० हिंवर। इरिमेदोरिमेदश्च गोधास्कधोरिमेदकः ॥ ९ ॥
अहिमेदोहिमारश्च पूतिमेदोहिमेदक। प्रोक्तो 'राजनिघंटे' तु 'के-
यदेवे' रिमस्तथा ॥ १० ॥ विट्खदिर सर्पमेदो मेदोरिपुररिस्तथा।
खरिभो 'द्रव्यरत्ने' तु वालस्कंधो 'मदे' तथा॥ ११ ॥ पुन्नारिश्च
तथा प्रोक्तो 'गणनामनिघटके'। गुणाः। अरिमेद कषायोष्णस्तिक्तो भूत-
विनाशक ॥ १२ ॥ शोफातिसारकासघ्नो विसर्पविषपहा 'नृपे'। क्रमिव-
णादिदत्तासृङ्नाशनो 'मदने' स्मृत ॥ १३ ॥ प्रमेहमेदहा प्रोक्तो वैद्ये-
'र्गणनिघटके'। 'धन्वे' तु मुखरोगघ्नो रक्तवेकाररद्धिम ॥ १४ ॥
'केये' तु क्रमिकंडूतीवस्तिरोगादिनाशन। दंतरोगहरः प्रोक्तो वैद्यवि-
द्याविशारदैः ॥ १५ ॥ 'द्रव्ये' तु दाहरद्दप्रोक्तो 'भावे' तु ग्रहमी-
तिहा। १८ पखौड। म० पाचोंदा वृक्ष। गु० पखोड। पखोड पवक्त्-
रपचवर्धनः पंचरक्षकः ॥ १६ ॥ प्रोक्तो 'राजनिघटे' तु पत्तूरो 'द्रव्य-
नामके'। पक्काड पक्कपौडश्च प्रोक्तो वैद्यविशारदै ॥ १७ ॥ गुणाः।
हस्ताजनविधी शस्त कटुर्जीर्णज्वरापह। 'नृपे' प्रोक्तो तथा 'द्रव्ये'
शीतविसहर स्मृत ॥ १८ ॥ १९ इगुदी। म० हिंगणी। गु० इगोरि-
यो। इगुदी हिंगुपत्रश्च विषकटोनिलातक। गौरस्तूक सुपत्रश्च शूलारि-
स्तापसन्द्रुम। तथा क्रोष्टुफलश्चैव 'राजनामनिघंटके' ॥ २० ॥ इगुदो
भद्रकस्तिक्तो तिगुदो पूतिकंटक। कटकागारवृक्षश्च कोरको वृक्ष एव च
॥ २१ ॥ व्यवहारिस्तिकमज्जः 'केयदेवनिघटके'। 'द्रव्ये' तु तापसत-
रुर्वृद्धकटक एव [illegible] ॥ २२ ॥ इगुलो 'मदने' प्रोक्तो तिल्वको 'गणना-
मके'। गुणाः। इगुदी मदगधी स्यात्कटूष्णा फेनिला लघु ॥ २३ ॥
रसायनी जतुवातकफव्रणहरी 'नृपे'। लूताविषघ्नी संप्रोक्ता वैद्यै 'र्मदनपा-
लके' ॥ २४ ॥ पाके कटु क्रमिघ्नी च श्वित्रकुष्ठमहापहा। विषशूलहरा
चैव प्रोक्ता 'केयनिघटे' ॥ २५ ॥ तत्फल वफवातघ्न चोष्ण 'भावप्र-
काशके'। २० करीरः। म० नेपती। गु० केर, केरडो। निष्पत्रक

करीरश्च करिरं ग्रंथिलस्तथा ॥ २६ ॥ क्रकरो गुडपत्रश्च करकस्तीक्ष्ण-कंटकः । प्रोक्तो ' राजनिघंटे ' तु वैद्यविद्याविशारदैः ॥ २७ ॥ शाकपु-ष्पो मृदुफलः क्रकचरतीक्ष्णसारकः । प्रोक्तो ' धन्वनिघंटे ' तु तथा ' कैय-निघंटके ' ॥ २८ ॥ करीरकस्तीक्ष्णवृक्षः सुफलश्च हुताशन' । निष्पत्रिका ' द्रव्यरत्ने ' क्रकरो ' मदनपालके ' ॥ २९ ॥ अपत्रा चैव कथिता ' भावनामनिघंटके ' । गुणा० । निष्पत्रिकाध्मानकरा कषाया च कटूष्ण-का ॥ ३० ॥ कफकारी श्वासहंत्री वातारुचिविनाशनी । शूलच्छर्दिस्म-र्जुव्रणनाशिनी ' राजनामके ' ॥ ३१ ॥ ' द्रव्ये ' बलासहा प्रोक्ता ' ध-न्वे ' तु गुदकीलहा । कटुतीक्ष्णश्लेष्महा च दुर्नामकफवातहा ॥ ३२ ॥ विषशोफाममेदघ्नी तत्पुष्पं तु त्रिदोषहृत् । फलं तूर्णं विकाशी च रूक्षं च कफपित्तजित् ॥ ३३ ॥ संग्राहीति भिषक्श्रेष्ठैः प्रोक्तं ' कैयनिघंटके ' । २१ स्नुही । म० सावरनिवडुंग, वडेनिवडुंग । गु० कंटाळो थोर । स्नुही सुधा महावृक्षः क्षीरी निस्त्रिंशपत्रिका ॥ ३४ ॥ शाखाकंटश्च गु-डाख्यः सेहुंडो वज्रकंटक. । बहुशाखो वज्रवृक्षो वातारिः क्षीरकांडकः ॥ ३५ ॥ भद्रो व्याघ्रनखश्चैव नेत्रारिर्दंडवृक्षकः । समंतदुग्धो गंडीरः स्नुक् चेति ' राजनामक ' ॥३६॥ बहुस्रावः ' कैयदेवे ' कुलिशद्रुम एव च । वज्री वज्री वज्रतुंडो ' द्रव्ये ' महातरुस्तथा ॥ ३७ ॥ ' भावे ' स-मंतदुग्धा च सिंहुंडः सिंहतुंडकः । वज्रद्रुमस्तथा प्रोक्तो वैद्यविद्याविशारदैः ॥ ३८ ॥ गुणाः । स्नुहिरुष्णा पित्तदाहकुष्ठवातप्रमेहनुत् । क्षीरं वा-तविषाध्मानगुल्मोदरहरं ' नृपे ' ॥ ३९ ॥ वांतिरेचनकृत्प्रोक्तो ' द्रव्य-नामनिघंटके ' । कटुतिक्तस्तीक्ष्णकश्च दीपनो गुरु रोचनः ॥ ४० ॥ वात-शूलाष्ठीलोन्मादार्शःशोफहा । शोकपांडुव्रणघ्नश्च मेदोदूषीविषघ्नकः ॥ ४१ ॥ अष्ठीलाहाश्मरीहेति प्रोक्तो ' मदनपालके ' । २२ त्रिधार । म० तिधारी निवडुंग । गु० तरधारो थोर । त्रिधारा च स्नुही प्रोक्ता तिस्रोधा-रा तु ' राज्के ' ॥ ४२ ॥ गुणाः । पूर्वोक्तगुणवत्यैषा विशेषादससिद्धि-दा । २३ कंथारी । म० । फणी निवडुंग । गु० हायलो थोर । कंथारी कंथरी कंथा दुर्धर्षा तीक्ष्णकंटका ॥ ४३ ॥ तीक्ष्णगंधा क्रूरगंधा दुष्प्रवेशा

वथा 'नृपे'। क्रूरकर्मा स्वाहस्ता च तथैव चक्रवछरी ॥ ४४ ॥ कपाल-कुकुलिकाम्लफला 'केयदेवनिघंटके'। गुणाः। कंथारी कटु तिक्तोष्णा क-फवातनिकृतनी ॥ ४५ ॥ शोफघ्नी दीपनी रुच्या 'रक्तग्रंथिहरा 'नृपे' ।२४ श्वेत एरंड। म० पांढरा एरंड। गु० धोळो एरंडो। श्वेतैरंडः सितैरंडश्चित्रो गंधर्वहस्तकः ॥ ४६ ॥ आमंडस्तरुणः शुक्लो वातारिर्दीर्घ-दंडकः। पंचांगुलो वर्धमानो रुबुको 'राजनामके' ॥ ४७ ॥ एरंडको यक्षहस्तो रुबुरुत्तानपत्रकः। गंधर्वो व्याघ्रपुच्छश्च शुक्लः 'केयनिघंटके' ॥ ४८ ॥ 'भावे' व्यडंबकामंडश्चोरुबूको व्यडंबनः। गुणाः। श्वेतैरंडः कटुस्तिक्तश्चोष्णः कफज्वरापहः ॥ ४९ ॥ रसाढ्यो वायुनिघ्नश्च कासहा 'राजनामके'। मधुरुष्णो गुरुश्चैव रेचकारी च कुष्ठहा ॥ ५० ॥ श्वास-कासाश्मरीगुल्मप्लीहोदरविनाशनः। वर्ध्मानाहकटीबस्तिरोगहा मेहना-शनः ॥ ५१ ॥ शिरोरोगार्मह्वैव प्रोक्तो 'राजनिघंटके'। तत्पत्रं वात-निघ्नं च कफक्रिमिविनाशनं ॥ ५२ ॥ गुल्मवातहरं प्रोक्तं 'भावनामनि-घंटके'। २५ रक्त एरंड। म० तांबडा एरंड। गु० रातो एरंडो। रक्तैरंडस्तथा व्याघ्रो हस्तिकर्णो रुबुस्तथा ॥ ५३ ॥ उरुबूको नागक-र्णश्चंचुरुत्तानपत्रकः। करपर्णो पंचनखः स्निग्धो व्याघ्रदलस्तथा ॥ ५४ ॥ चित्रबीजो व्याघ्रकरो न्हस्वैरंडस्तु 'राजके'। एरंडको हस्तपर्णो मंडो लो-हितशीर्षकः ॥ ५५ ॥ व्याडंबः 'केयदेवे' तु 'मदने' चंचुलस्तथा। व्याघ्रतरुर्वस्तवैरिः प्रोक्तो वैद्यविशारदैः ॥ ५६ ॥ व्याघ्रतलो व्याघ्रपुच्छ-रिरपमकर्णश्च 'द्रव्यके'। गुणाः। रक्तैरंडः श्वयथुहा वायुरक्तार्तिपांडुहा ॥ ५७ ॥ भ्रातिश्वासज्वरघ्नश्च रेचको 'राजनामके'। वातरक्तहरश्चैव 'केयदेवनिघंटके' ॥ ५८ ॥ शूलशोफहरश्चैव तत्फलं भेदवातहृत्। 'द्रव्ये' तु पार्श्वशूलघ्नं प्रोक्तं वैद्यविचक्षणैः ॥ ५९ ॥ आममारुतहच्चैव फलमत्युष्णदायकं। गुल्मशूलानिलहरं यकृत्प्लीहोदरार्शोहृत् ॥ ६० ॥ कटुका दीपनी मज्जा मलभेदकरी मता। वातश्लेष्मोदरघ्नीति प्रोक्ता 'मा-धमकाशके' ॥ ६१ ॥ २६ स्थूलैरंड। म० थोर एरंड। गु० मोटो ए-रंडो। स्थूलैरंडो महैरंडो महापंचांगुलो 'नृपे'। गुणाः। स्थूलैरंडो गुणाढ्यः

स्याद्रसवीर्यविपत्तिषु ॥ ६२ ॥ २७ घोटी। म० घोटी बोर। गु० घोटी। घोंटा बदरिका घोटी गोलिका शत्रुकंटकः। कर्कटी च तुरंगी च तुरगा 'राजनामके' ॥६३॥ गुणाः। घोटिका कटुकोष्णा च मधुरा वातनाशनी। व्रणकंडूतिकुष्ठासृग्दोपश्वयथुहा 'नृपे'॥६४॥ २८ लताकरंज। म० सागरगोटी, गजगा। गु० काकच। लताकरंजो दुस्पर्शो वीरास्यो वज्रबीजकः। धनदाक्षः कंटफलः कुबेराक्षश्च 'राजके' ॥६५॥ गदप्रस्तिरिगिच्छिको 'द्रव्यरत्नाकरे' तथा। गुणाः। लताकरंजपत्रं तु कटूष्णं कफवातनुत् ॥६६॥ तद्बीजं दीपनं पथ्यं शूलगुल्महरं 'नृपे'। २९ कारी। म० कारी। गु० कारी। कारी तु कारिका कार्या गिरिजा कटुपत्रिका ॥ ६७ ॥ तत्रैका कंटकारी स्यादन्या स्वाद्रूपकारिका। गुणाः। कारी कषायमधुरा द्विविधा पित्तनाशनी ॥ ६८ ॥ दीपनी ग्राहिणी रुच्या कंठशोधकरी गुरुः। मदन। ३० म० गेळा। गु० मींढोळ। मदनः शल्यः शैट्यः पिंडी धाराफलस्तथा ॥ ६९ ॥ तगरः करहाटश्च राठः पिंडीतकस्तथा। कंटाल्यो विषमुष्टिश्च छर्दनो विषपुष्पकः ॥ ७० ॥ घंटालो मादनो हर्प्यो घंटाख्यो बस्तिशोधनः। अंधिफलो गोलफलो मदनाव्हश्च 'राजके' ॥ ७१ ॥ 'धन्वे' विषपुष्पकश्च गालवः शल्यकः फलः। मरुपकश्च श्वसनो मातुलो बीजपुष्पकः ॥ ७२ ॥ 'कैयदेवे' तथा 'द्रव्ये' गालो गालफलः स्मृतः। गुणाः। मदनः कटुतिक्तोष्णः कफवातव्रणापहः ॥ ७३ ॥ शोफघ्नो वांतिकारी [illegible] प्रोक्तो 'राजनिघंटके'। लेखनो लघु रूक्षश्च प्रतिश्यायज्वरघ्नकः ॥ ७४ ॥ कुष्ठार्शोविद्रधिहरः प्रोक्तः 'कैयनिघंटके'। आनाहगुल्मनिघ्नश्च प्रोक्तो 'द्रव्ये' भिषग्वरैः ॥ ७५ ॥ ३१ महापिंडीतक। म० थोर गेळ, काळें गेळ। वाराहोऽन्यः कृष्णवर्णो महापिंडीतको महान्। स्निग्धपिंडीतकश्चान्यः स्थूलरक्षफलो 'नृपे' ॥ ७६ ॥ गंधपिंडारकश्चैव प्रोक्तो 'कैयनिघंटके'। तथा 'कैये' पीतके तु स्नेहपिंडीतकः स्मृतः ॥७७॥ कुरंटकस्तथा श्वेते श्वेतपिंडीतकः स्मृतः। चर्मकारतरश्चैव चर्मदुर्गंधिलफलिकः ॥ ७८ ॥ गुणाः। 'नृपे' तथान्यो* मदनः कटुतिक्तरसान्वितः।

* एथें अन्यो या शब्दानें थोर गेळ, काळें गेळ, पिवळें गेळ व पांढरें गेळ इत्यादि चारीच्या गेळांचे गुण जाणावेत.

क्रंदन कफहृद्रोगपक्वामाशयशोधन ॥ ७९ ॥ ३२ वेल्लतर । म० वेल्तूर । गु० वेलतरु । वेल्लतरो वीरतरु क्षुधाकुशलसञ्ज्ञक । दीर्घमूलो वीरवृक्ष कृच्छ्रारि 'राजनामके' ॥ ८० ॥ तथाऽरुणाऽसितश्वेतनील-लोहितपुष्पक । शमीपत्रो सूक्ष्मपत्रो तथा वेल्लन्तर स्मृत ॥ ८१ ॥ इया-आतितुल्यकुसुम कटकी विजलदेशजः । प्रोक्तो 'भावप्रकाशके' तु तथा 'कैयनिघण्टके' ॥ ८२ ॥ बहुधारो बृहद्वासो दीर्घपत्रोऽश्मकृच्छ्रहा । 'द्रव्यरत्ने' प्रभिपर्णो वीरमुर्वीरपादप ॥ ८३ ॥ बहुवारो वेलतूरो बहुमूलो 'मदे' 'गणे' । गुणा । वेल्लतर कटूष्णश्च कृच्छ्रघ्न सधि-शूलनुत् ॥ ८४ ॥ वन्हिदीप्तिकर ।पथ्यो वातघ्नो 'राजनामके' । तृष्णा-कफापहश्चैव मूत्राघाताऽश्मरीघ्नर ॥ ८५ ॥ ग्राही च योनिमूत्रघ्न 'कैय-देवनिघण्टे' । चत्राहेति 'गणे' प्रोक्त प्राचीनभिषजावरैः ॥ ८६ ॥ ३३ तरटी । म० तरटी । गु० तरटी । तरटी तारटी तीव्रा बर्बुरा रुचा-बीजका । गुणाः । 'नृपे' तु तिक्तमधुरा गुरुर्बल्या कफापहा ॥ ८७ ॥ ३४ श्रीवल्ली । म० शिकेकाई । गु० चिकाखाई । श्रीवल्ली शिववल्ली च कटवल्ली च शीतला । अम्ला कटुफलाऽथतथा दुरारोहा 'नृपे' तथा॥ ॥ ८८ ॥ गुणा । श्रीवल्ली कटुरम्ला च वातशोफकफापहा । तरफल तैउलेपघ्नमत्यम्ल रुचिकृत् 'नृपे' ॥ ८९ ॥ ३५ निकुंजिका । म० शिके-काईचा भेद । गु० सीकाखाई भेद । अन्या निकुंजिकाऽम्लाख्या कुंजिरा कुंजवल्लरी । गुणाः । निकुंजिका 'नृपे' प्रोक्ता श्रीवल्लीसदृशी गुणै ॥ ॥ ९० ॥ ३६ अपर्वदंड । म० रामबाण । गु० रामबाण । अपर्वदंडो दीर्घश्च रामबाणो नृपप्रिय । रामकांडो रामशरो रामस्तेषुश्च 'रामके' ॥ ९१ ॥ गुणा । रामकांडसमूलं स्यादीषदुष्ण रतिप्रद । रसे चाम्ल-कषाय च पित्तकृत्कफवातहृत्॥९२॥३७यावनालशर । म० रामबाणभेद, जोंधळी । गु० रामबाणभेद । यावनालोऽथ नादेयो दुरारुहारिशुभ्र । यवनालनिभश्चैव नरपशुरु 'रामके' ॥ ९३ ॥ गुणाः । यावनालशर-मूलमीषदम्लमधुरत्वम् । शीत पित्ततृषापह पशूनामयत्नद ॥ ९४ ॥ ३८ शर । म० शिरकांडे, जरतृण । गु शिरकाडा । शरो बाण इषु

कांड उत्कटः सायकः क्षुरः । इक्षुरः क्षुरिकापत्रो विशिखश्च ततः स्मृत' ॥ ९५ ॥ प्रोक्तो 'राजनिघंटे' तु तथा 'भावप्रकाशके' । भद्रमुंजस्तेजनश्च तथेक्षुवेष्टलः स्मृतः ॥ ९६ ॥ ३९ स्थूलशर । म. थोर तिरकांडी गु. मोटा तिरकांडा । महाशरः स्थूलशरो दीर्घमूलक एव च । क्षुरपत्रश्चेक्षुरकः संप्रोक्तो स्थूलसायकः ॥ ९७ ॥ बहुमूल्गे 'नृपे' चैव वैद्यविद्याविशारदैः । गुणा. । शरद्वयं तु मधुरं तिक्त कफविनाशनं ॥ ९८ ॥ मदभ्रांतिहरं चैव बल्यं वीर्यकरं ध्रुवं । किंचिद्धानकरं प्रोक्तं वैद्यै 'राजनिघंटके' ॥ ९९ ॥ कफवातहरं चैव शीतवीर्यं च शोषहं । दाहच्छर्दिहरं प्रोक्तं वैद्यै 'गैणनिघंटके' ॥ २३०० ॥ ४० मुंजा । म० गु० मुनतृण । मुनो मौंजीतृणाख्य. स्याद्ब्रह्मण्यस्तेजनाव्हय. । वानीरजो मुननकः शारी दर्भाव्हयस्तथा ॥ १ ॥ दूरमूग्गे दृढतृणो दृढमूल्गे बहुप्रज । रंजनः शत्रुभंगश्च 'राजनामनिघंटके' ॥ २ ॥ क्षुरस्तु स्थूलदर्भश्च बाणाव्हो ब्रह्ममेखल. । प्रोक्तो 'धन्वनिघंटे' तु तथा 'भावे' मुनेखलः ॥३॥ गुणाः । मुंजस्तु मधुरः शीत. कफपित्तजदोषजित् । अहरक्षासु दीक्षासु भूतघ्न पावनो 'नृपे' ॥ ४ ॥ चोष्णं वीसर्पमूत्रघ्नं बस्त्यक्षिरोगहा 'धने' । 'द्रव्ये' तु दाहहा प्रोक्तो वैद्यविद्याविशारदै' ॥ ५ ॥ ४१ काश । म० थोर कसई । गु० कांसडो । काश. कांडेक्षुरिक्ष्वारिः काकेक्षुर्वायसेक्षुक' । इक्षुरश्चेक्षुकांडश्च शारद. सितपुष्पकः ॥ ६ ॥ नादेयो दर्भपत्रश्च लेखनी कांडकांडरः । कयालंकारकश्चैव 'राजनामनिघंटके' ॥ ७ ॥ मुकांडश्च तथा प्रोक्तो वैद्यै 'मेदनपालके' । गुणा. । काशश्च शिशिरो गौरयो रुचिकृत् पित्तदाहनुत् ॥ ८ ॥ तर्पणो बल्कृद्वृष्यः श्रमशोपक्षयापहः । प्रोक्तो 'राजनिघंटे' तु वैद्यविद्याविशारदै. ॥ ९ ॥ कृच्छ्राश्मरी दाहरक्तपित्तक्षयहरो 'मदे' । तृषाहा मूत्ररोधघ्नो वातपित्तघ्नको 'गणे' ॥ १० ॥ ४२ सिरी । म० लघु कसई । गु० नहानो कासडो । अन्यो शिरी सिरी गुंद्रा अश्वालो नीरजः शरः । प्रोक्तो 'राजनिघंटे' तु इक्षुगंधा च 'भावके' ॥ ११ ॥ तथा चेक्षुरसश्चैव वैद्यविद्याविशारदैः । श्वेतचामरपुष्पश्च तथेक्षुकुसुमो 'धने' ॥ १२ ॥ काशेक्षुस्तु 'मदे' चैव मुराड. श्वेतचामरः

॥ १३ ॥ ४३ सित-
।गुणाः। मिशी मधुरशीता च पित्तदाहक्षयापहा
दर्भे। म० श्वेतदर्भ। गु० दरभ। सितदर्भो ह्रस्वकुशः पूतो यज्ञियपत्रकः
। वज्रो ब्रह्मपवित्रश्च तीक्ष्णो यज्ञस्य भूषणः ॥ १४ ॥ सूचीमुखः पुण्य-
तृणो वन्हिपूतस्तृणो 'नृपे'। मृदुदर्भः कुशो बर्हिः शुचिर्चीरः सुवृत्तकः
॥ १६ ॥ 'धन्वंतरिनिघंटे' तु संप्रोक्तो भिषजांवरैः। कुशं कुथः पवित्रं
च दर्भश्चामरकोशके' ॥ १६ ॥ 'द्रव्यरत्नाकरे' चैव सूच्यग्रः परिकी-
र्तितः। श्वेतपत्रः श्वेतदर्भो याज्ञिय. क्षुद्रपत्रक. ॥ १७ ॥ प्रोक्तो 'गण-
निघंटे' तु वैद्यविद्याविशारदैः। गुणाः। दर्भमूलं हिमं रुच्यं मधुरं पि-
त्तनाशनं ॥ १८ ॥ रक्तज्वरतृषाश्वासकामलानाशनं 'नृपे'। रक्तपित्त-
प्रशमनं मूत्रकृच्छ्रहरं 'धने' ॥ १९ ॥ 'मदे' तु बस्तिरोगघ्नं कफ-
पित्तविनाशनं। रक्तप्रदरहं 'भावे' अश्मरीघ्नं तथा 'द्रवे' ॥ २० ॥
छर्दिमूर्छाहरं चैव दाहघ्नं 'गणनामके'। शुक्रशुद्धिकरं चैव रक्तशुद्धि-
करं तथा ॥ २१ ॥ ४४ हरिदर्भ। म० थोरदर्भ। गु. डाभडा। कुशो-
न्य शरपत्रश्च हरिदर्भः पृथुच्छदः। शिरी च रूक्षदर्भश्च दीर्घपत्रः प-
वित्रक. ॥ २२ ॥ प्रोक्तो 'राजनिघंटे' तु भिषग्विद्याविशारदैः। ख-
रोन्य. पृथुलः शीरी गुंद्रा वानीरजो 'धने' ॥ २३ ॥ गुणाः। दर्भौ
द्वौ च गुणे तुल्यो तथापि च सितोधिकः। यदि श्वेतकुशाभावस्तत्परं
योजयेद्भिषक् ॥ २४ ॥ ४५ बल्वजा। म० मोळ। गु. मोळा। बल्वजा
दृढपत्री च तृणेक्षुस्तृणबल्वजा। मौंजीपत्रा दृढतृणा पानीयाश्मा दृढक्षुरा
॥ २५ ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यविद्याविशारदैः। गुणाः। ब-
ल्वजा मधुरा शीता पित्तदाहतृषापहा ॥ २६ ॥ वातप्रकोपनी रुच्या
कंठशुद्धिकरी 'नृपे'। ४६ कत्तृण। म० लघुरोहिमगवत। गु० रोंस
। कुतृणं कत्तृणं भूतिर्भूतिकं रोहिषं तृणं ॥ २७ ॥ श्यामकं ध्यामकं
पूतिमृद्वलं देवदग्धकं। प्रोक्तं 'राजनिघंटे' तु भिषक्शास्त्रसपंडितैः
॥ २८ ॥ 'धन्वे' तु सरलं पौरं पाटलं देवदंडकं। तथा 'मदनपाले'
तु सरलं देवगंधकं ॥ २९ ॥ 'गणे' विंदुचितं 'कोशे' संप्रोक्तं देव-
जग्धकं। गुणाः। लघुरोहिषसंज्ञं तु कटुतिक्तकफापहं ॥ ३० ॥ शरर-

शल्यादिदोषघ्नं बाल्यग्रहहरं 'नृपे'। हृद्रोगकंठहं चैव रक्तपित्तविनाशनं ॥ ३१ ॥ कफज्वरहरं चैव कासशूलहरं 'मदे'। कफपित्तकृमिघ्नं च कंडूविषज्वरघ्नकं ॥ ३२ ॥ वैद्ये 'गणनिघंटे' तु संप्रोक्तं नैव संशयः ।

**४७ दीर्घरोहिषक** । **म.** मोठें रोहिसगवत । **गु०** मोठा रोस । 'नृपे' रोहिषकं दीर्घं दृढकांडो दृढच्छदं ॥ ३३ ॥ रागोष्टं दीर्घनालश्च तिक्तसारश्च कुत्सितं । **गुणाः** । दीर्घरोहिषकं तिक्तं कटूष्णं कफवातजित् ॥३४॥ भूतग्रहविषघ्नं च व्रणक्षतविरोपणं ।

**४८ नल** । **म.** देवनळ । **गु०** नाळी । नलो नालो नडश्चैव कुशिरंध्रोथ कीचकः ॥ ३५ ॥ वंशांतरश्च धमनः शून्यमध्यो विभीषण । छिद्रांतो मृदुपत्रश्च रंध्रपत्रो मृदुच्छदः ॥ ३६ ॥ नालवंशः पोटगलो 'राजनामनिघंटके'। षटश्च नर्तको रंध्री 'धन्वंतरिनिघंटके' ॥ ३७ ॥ मृत्युपुष्पः 'कैयदेवे' पोटस्तु 'द्रव्यरत्नके' । 'मदे' पिठ· पुष्पमृत्युर्नलिको 'गणनामके' ॥ ३८ ॥ **गुणाः** । नलः शीतकषायश्च मधुरो रुचिकारकः । रक्तपित्तप्रशमनो पीपनो वीर्यदो 'नृपे' ॥ ३९ ॥ वृद्धस्त्रीयोनिमूत्रार्तिपित्तदाहविसर्पनुत् । चोष्णश्च 'कैयदेवे' तु 'द्रव्ये' कृच्छ्रहरः स्मृतः॥४०॥ रक्तदाहहरश्चैव कफपित्तहरो घने 'भावे' रक्तप्रदरहा हृद्योनिरस्तिरोगहा ॥४१॥ वस्तिशूलाश्मरीपित्तरोगघ्नो 'गणनामके'।

**४९महानल** । **म०** थोर देवनळ । **गु०** मोटी नाळी । 'नृपे' महानलो वन्यो देवनालोत्तमो नलः ॥ ४२ ॥ स्थूलनालः स्थूलदंडः सुरमालः सुरद्रुमः । **गुणाः** । देवनालोति मधुरो हृद्य ईषत्कषायकः ॥ ४३ ॥ नलः स्यादधिको वीर्ये शस्यते रसकर्मणि ।

**५० नीलदूर्वा** । **म०** निळी हरळी । **गु०** नीली धो । स्यान्नीलदूर्वा हरितं च शांभवी श्यामा च शांता शतपर्विकामृता । पूता शतग्रंथिरनुष्णवल्लिका शिवा शिवेष्टापि च मंगला जया ॥ ४४ ॥ सुभगा भूतहंत्री च शतमूला महौषधी ॥ ४५ ॥ अमृता विजया गौरी शांता च 'नृपनामके'। शतपर्वा शीतवीर्या शतवल्ली च शीतला ॥ ४६ ॥ हरितं शाड्वं शष्पं 'धन्वंतरिनिघंटके'। सहस्रवीर्यानंता च प्रोक्ता 'भावप्रकाशके' ॥ ४७ ॥ **गुणाः** । नीलदूर्वा 'नृपे' शीता मधुरा तिक्तरोचनी । रक्तपित्तातिसारघ्नी

कफवातज्वरापहा ॥ ४८ ॥ वांतिछर्दकफपित्तघ्नी कफपित्तहरा 'द्रवे'। 'धन्वंतरिनिघंटे' च संमोका श्लेष्मवातला ॥ ४९ ॥ ९१ श्वेतदूर्वा। म० पांढरी हरळी। गु० धोळी ध्रो। गोलोमी श्वेतदूर्वा च सिताख्या तदनंतरं ॥ ९० ॥ चंडा भद्रा भार्गवी च गौरी चैत्रा तु दुर्भरा। विघ्ना ईशानकांता च श्वेतानंता च दिव्यका ॥ ९१ ॥ श्वेतकांडा प्रचंडा च तथैव मुखवल्लभा। सहस्रवीर्या तु शुभा तथा सहस्रकांडका ॥ ९२ ॥ सहस्रपर्वा स्वच्छा च सुपर्वा तु सितच्छदा। कच्छान्तरुहा च तथा 'राजनामनिघंटके' ॥ ९३ ॥ भार्गवी तु रुहा 'धन्वे' श्वेतदंडा सितालता। आमातिसारकासघ्नी रुच्या दाहतृषापहा। 'नृपे' प्रोक्ता तथा 'भावे' कषाया च विसर्पजित् ॥ ९५ ॥ वल्लीदूर्वा। म० वेलहरळी। गु० वेल्य ध्रो। मालादूर्वा वल्लिदूर्वा लिंदूर्वा मालाग्रंथिर्गंथिला ग्रंथिदूर्वा। मूलग्रंथिर्वेल्लरी ग्रंथिमूला रोहत्पर्वा पर्ववल्ली सितारुया ॥ ९६ ॥ गुणाः। वल्लिदूर्वा सुमधुरा कफवांतितृषापहा। पित्तघ्नी शिशिरा तिक्ता 'राजनामनिघंटके' ॥ ९७ ॥ ९३ गंडदूर्वा। म० गाठे हरळी। गु० गंडुर ध्रो। गंडाली स्याद्गंडदूर्वातितीव्रा मत्स्याक्षी स्याद्वारुणी मीननेत्रा। श्यामग्रंथिर्गंथिला ग्रंथिपर्णी सूचीपत्रा श्यामकांडा जलस्था ॥ ९ ॥ शकुलाक्षी कलाया च नित्रा तु 'राजनामके'। बह्वी नाडी तथा प्रोक्ता वाल्ही तु शकुलाक्षिका ॥ ९९ ॥ 'धन्वंतरिनिघंटे' तु मत्स्यगंधा 'मदे' तथा। गुणाः। गंडदूर्वा तु मधुरा वातपित्तज्वरापहा ॥ ६० ॥ शिशिरा द्वंद्वदोषघ्नी श्रमतृट्श्रमहा 'नृपे'। लोहद्रावी दाहहा च बलासघ्नी च रक्तहा ॥ ६१ ॥ पित्तक्षयहरा हैमा प्रोक्ता 'मदनपालके'। 'भावे' तु ग्राहिणी कुष्ठपित्तज्वरहरा स्मृता ॥ ६२ ॥ दूर्वासाधारणगुणाः। दूर्वाः कषाया मधुराश्च शीताः पित्ततृषारोचकवांतिहन्त्र्यः। सदाहमूर्च्छाग्रहभूतशातिश्लेष्मश्रमध्वसनतृप्तिदाश्च ॥ ६३ ॥ ९४ कुंदरु। म० कुंदागवत। गु. कुंदागवत। कुंदरु कुंदरो रुंडी दीर्घपत्रः खरच्छदः। रसाढः क्षेत्रसंभूतः सुतृणो मृगवल्लभः ॥ ६४ ॥ गुणाः। गौल्यं कुंदरमूलं च शतिं पित्तातिसारनुत्

प्रशस्तं गोधनानां च बलपुष्टिप्रदं ' नृपे ' ॥ ६५ ॥ ५५ भूतृण । म० सुगंध रोहिसगवत । गु. सुगंध रोंस । भूतृणं रोहिणो भूतिर्भूतिकोऽथ कुटुंबकः । मालातृणं सुमाली च छत्रोऽतिच्छत्रकस्तथा ॥ ६६ ॥ गुह्यबीजः सुगंधश्च गुच्छालः पुंस्त्वपिग्रहः । वाधिरश्चातिगंधश्च शृंगरोहस्तु ' राजके ' ॥ ६७ ॥ गुच्छश्चैव तथा प्रोक्तो वैद्यविद्याविशारदैः । गुणा । भूतृणं कटुतिक्तं च वातसंतापनाशनं ॥ ६८ ॥ हंति भूतग्रहावेशान्विषदोषांश्च ' राजके ' । उदर्दक्रिमिकाघ्नं कफश्लेष्मार्शोहं ' गणे ' ॥ ६९ ॥ तीक्ष्णमुष्णं विदाही च दीपनं लघु रोचनं। रूक्षं च मुखशुद्धं स्यादवृष्यं पित्तदूषकं ॥ ७० ॥ रक्तदूषकमित्युक्त वैद्यै'र्भावप्रकाशके' । ५६ सुगंधभूतृण । म० पुदनी गवत, सुगंधी गवत । गु० सुगंधतृण । सुगंधभूतृणश्चान्यः सुरसः सुरभिस्तथा ॥ ७१ ॥ गंधतृणः सुगंधश्च मुखवासस्तु ' राजके ' । तथा ' गणनिघंटे ' तु वैद्यैः प्रोक्तं सुगंधिकं ॥ ७२ ॥ गुणाः । गंधतृणं सुगंधिरयादीक्तिक्तं रसायनं । स्निग्धं मधुरशीतं च कफपित्तश्रमापहं ॥ ॥ ७३ ॥ ५७ ऊखल । म० घोडेसरगवत, नितारा । गु० ऊखलतृण । ऊखलो भूरिपत्रश्च सुतृणश्च तृणोत्तम । गुणाः । ऊखलो बल्दो रुच्यः पशूना सर्वदा हितः ॥ ७४ ॥ प्रोक्तो ' राजनिघंटे ' तु भिषक्शास्त्रपरायणैः । ५८ इक्षुदर्भा । म. अश्वालु, मुटेगवत गु. इक्षुदर्भ । इक्षुदर्भा सुदर्भा च पत्रालुस्तृणपत्रिका ॥ ७५ ॥ गुणाः । इक्षुदर्भा सुमधुरा स्निग्धोष्णा तु कषायका । कफपित्तहरा रुच्या लघु संतर्पणी ' नृपे ' ॥७६॥ ५९ गोमूत्रिका । म. थोर शिंपीगवत, ताबेटी गवत । गु. गोमूत्रतृण । गोमूत्रिका रक्ततृणा क्षेत्रजा कृष्णभूमिजा ॥ ७७ ॥ गुणाः । गोमूत्रिका तु मधुरा वृष्या गोदुग्धदा ' नृपे ' । ६० शिल्पिका । म. लहान शिंपी गवत । गु शिल्पिकातृण । शिल्पिका शिल्पिनी शीता क्षेत्रजा च मृदुच्छदा ॥७८॥ गुणाः । शिल्पिका मधुरा शीता तद्वीजं बलदं 'नृपे' । ६१ ॥ निश्रेणिका । म. निशेणी गवत, निरोपी, कोंकणांत प्रसिद्ध । गु. निशेणी तृण । निश्रेणिका श्रेणिका च नीरसा वनवल्लरी ॥ ७९ ॥ वनवल्लभा तथा प्रोक्ता 'राजनामनिघंटके' । गुणाः । निःश्रेणिका नीरसोष्णा पशूनामरुचिप्रदा ॥८०॥

समाप्तोऽयं प्रथमभागः